उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम् [1]।
अवरोहश्च हेमन्तः सर्पाणां बलिरष्टकः ।।
ईशानस्य बलिर्विष्णोः शयनं परिवर्तनम् [2] ।
दुर्गेन्द्रस्थापनोत्थाने ध्वजोत्थानं च वज्रिणः [3] ।।
पूर्वत्र प्रतिषिद्धानि परत्रान्यच्च दैविकम् ।।

इत्यनेन मलमासे वर्जितानां शुद्धमासे कर्तव्यत्वेन संग्रहः। अत्र सर्वत्र साक्षिवचनानि [4] माधवकालनिर्णये द्रष्टव्यानि ।।

अधिकमासात्पूर्वमारब्धं चान्द्रायणादिकं तत्र समापनीयमेव । त्रिंशद्दिनात्मकत्वात् । यत्तु शाकव्रतादिकं तत्तु मासद्वये कार्यम् । आरम्भसमाप्त्योः शुद्धमासे विहितत्वेन तन्मध्ये अधिकमासस्य पतितत्वात् ।

आगन्तुकं शनिवारोपवासादिकं तत्रैव संकल्पितं तत्र कार्यमेव । तथा च नित्यं नैमित्तिकं स्नानं औपासनग्रहणस्नानादिकं जातकर्मादिकं च कालान्तरे कर्तुं नावकाशम् । आधानादिकं तु मलमासे न कार्यम् ।

---

१. पवित्रारोपण-दमनार्पणे ।

२. विष्णोः शयनपरिवर्तनाद्युत्सवः ।

३. इन्द्रध्वजोत्सवः ।

४. साक्षिवचनानीति । माधवकृतकालनिर्णये । तत्र च यमः -
'गर्भे वार्धुषिके..' इत्यादि । एतद्विषये यममरीचिगौतमादिस्मृत्युदाहरणानि स्पष्टतराणि सन्ति ।

श्राद्धं तु अन्यमासमृतानां त्रयोदशो मासः मलमासश्चेत् मलमासे प्रथमदिने, तत्रैव तस्मिन्द्वादशे मास्यतीतेऽनन्तरदिने प्रथमाब्दिकं कार्यम् । मध्ये मलमासश्चेत् त्रयोदशमासानन्तरं स्वीये मासि कार्यम् । प्रतिसांवत्सरिकश्राद्धं तु अन्यमासमृतानां त्रयोदशं मलमासं विहाय चतुर्दशे शुद्धे मासि कार्यम् । मलमासमृतानां तु कालान्तरे तस्मिन्नेव मलमासश्चेत्तदा मलमास एव प्रतिसांवत्सरिकं कार्यं चतुर्दशे मास्यपीति ।।

मासस्य द्वौ पक्षौ शुक्लः कृष्णश्च । दैवकर्मणि[1] शुक्लो मुख्यः पित्र्ये कर्मणि कृष्णः पक्षः। एकैकपक्षस्य प्रतिपदादयः पूर्णिमान्ता अमावास्यान्ता वा पंचदश तिथयः। स्वरूपेणैव कलावशिष्टस्य चन्द्रस्य अग्न्यादिभिः पीयमानाः पंचदश कलाः प्रतिपदादिशब्दे-नोच्यन्ते। कृष्णपक्षेऽग्न्यादिभिः कलाः पीयन्ते ताः कला अग्न्या-दिभिः शुक्लपक्षे चन्द्रे पूर्यन्ते । ताश्च प्रतिपदादिशब्देनोच्यन्ते ।

तिथिः[2] द्विविधा शुद्धविद्धभेदात् । अन्यतिथिसंबन्धरहिता

---

१. 'देवकार्यार्थं पितृकार्यार्थं पक्ष्यते परिगृह्यते यः कालविशेषः सपक्षः' इति माधवोक्तं निर्णीयते दैवे कर्मणीत्यादिना । अथवेयं व्याख्या - चन्द्रस्य पंचदश कलानां पूरणं क्षयो वा यस्मिन्निति ।

१. तिथिरिति । तनोति विस्तारयति वर्धमानां क्षीयमाणां वा चन्द्रकलामेकां यः काल-विशेषः स तिथिः । अथ वा तन्यते कलया इति तिथिः । तदुक्तं -

'तन्यन्ते कलया यस्मात्तस्मात्तास्तिथयः स्मृताः' - इति सिद्धान्तशिरोमणौ ।

स्कान्दे च - 'अमादिपूर्णमास्यन्ता या एव शशिनः कलाः।

तिथयस्ताः समाख्याताः षोडशैव वरानने।।' - इति ।

शुद्धा । अन्य संबन्धोपेता विद्धा । सापि द्विविधा । पूर्वविद्धा परविद्धा चेति । तत्रोदये पूर्वया तिथ्या त्रिमुहूर्तयुक्ता पूर्वविद्धा । सायंकाले परतिथ्या त्रिमुहूर्तयुक्ता परविद्धा ।[1]

दिवसस्य प्रातःसंगवमध्याह्नापराह्णसायाह्नरूपेण पंचधा भेदो द्रष्टव्यः । अयं तु वेधः देवान्तरोपवासैकभक्तनक्तायाचितव्रतेषु बोध्यः । अवान्तरभेद एतेषां प्रायोऽनुष्ठानाभावात् नोच्यते ।।

## ।। अथ श्राद्धकालनिर्णयः ।।

श्राद्धं[2] द्विविधं । एकोद्दिष्टं पार्वणं[3] चेति । तत्रैकोद्दिष्टे मध्याह्नव्यापिनीतिथिर्ग्राह्या । तत्रैकदेशव्याप्तौ यत्राधिका व्याप्तिः सा ग्राह्या । समव्याप्तौ तूत्तरतिथिक्षये पूर्वतिथिः । वृद्धौ तूत्तरा ।।

एकोद्दिष्टं नाम एकं पुत्रभ्रात्रादिकमुद्दिस्य क्रियमाणं प्रतिसांवत्सरिकादि श्राद्धम् । तथा अपरपक्षचतुर्दश्यां शस्त्रादिभिः

---

१. पक्षद्वयेऽपि तिथयः तिथिं पूर्वां तथोत्तराम् ।
त्रिमुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ।।

इति सामान्यतो वेधमाह माधवीये पैठीनसिः ।

अयं च उपावासातिरिक्तविषय इति अवगन्तव्यम् । उपवासोपयुक्तवेधनिर्णयः एकादशीतिथिनिर्णये द्रष्टव्यः ।

२. प्रेतं पितॄंश्च निर्दिश्य भोज्यं यत्प्रियमात्मनः ।
श्रद्धया दीयते यत्र तच्छ्राद्धं परिकीर्तितम् ।।

इति पृथिवीचन्द्रोदये मरीचिः । ब्राह्मणस्वीकारान्तचतुर्थ्यन्तपदोपनीतपित्राद्युद्देश्यकत्यागः श्राद्धमित्यर्थः ।

३. पार्वणमिति । पित्रादित्रयोद्देशेन विहितं पिण्डयुतम् ।

मृतपित्रादीनां क्रियमाणं च । पार्वणं तु पित्रादित्रयं मात्रादित्रयं मातामहादित्रयं मातामह्यादित्रयमुद्दिश्य क्रियमाणं श्राद्धम् । तच्च पार्वणं दर्शश्राद्धप्रतिसांवत्सरिकश्राद्धादिभेदेन द्वेधा ।

मृताहं यो न जानाति मासं वाऽपि कथंचन ।
तेन कार्यममायां तु श्राद्धं माघेऽथ मार्गके ।।

द्वादश्यादितिथिष्वपि कार्यम् ।।

## ।। तत्र दर्शश्राद्धनिर्णयः ।।

'दर्शश्राद्धविधिं त्रिधास्थितदिनान्त्यांशे अपराह्णे चरेदि'ति कालनिर्णयदीपिकोक्तेः। अयं निर्णयः अपराह्णव्यापी दर्शश्राद्धविधिः साग्निकानाम् । निरग्निकानां तु कुतुपकालव्यापी दर्शो ग्राह्यः। दिनद्वये कुतुपे सत्वे समस्तकुतुपव्यापी ग्राह्यः। दिनद्वये कुतुपाभावे पूर्वः। दिनद्वयेऽपि स्वल्पकुतुपसंबन्धे वृद्धिसाम्ययोरुत्तरः। क्षये पूर्वः। यत्स्वल्पं दिवसद्वयेऽपि कुतुपं गच्छेत् तदाऽप्युत्तरो ग्राह्यः। वृद्धिसमत्वस्था पूर्वाह्णीति कालनिर्णयः। कात्यायनेनाप्युक्तं -

पिण्डान्वाहार्यकं श्राद्धं क्षीणराजनि शस्यते ।
वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः ।। - इति ।

क्षीणराजनि अमावास्यायामित्यर्थः। दिवसं पूर्वाह्णमध्याह्नापराह्णभेदेन त्रिभागं कृत्वा अपराह्णव्यापिन्यमावास्या ग्राह्या । अथवा दर्शे पञ्चकालपक्षवाक्यानां बहुत्वात् 'पिण्डान्वाहार्यकमि'ति कात्यायनवचनस्य काण्वमात्रपरत्वसंभवात् काण्वव्यतिरिक्तसर्वशाखिनां

पञ्चकालपक्षेणैव[1] दर्शकालनिर्णयो ज्ञेयः। अतः सर्वेषाममावास्यायामपि पञ्चकालपक्षेणैव अपराह्न निर्णयः।

अस्मिन्वाक्ये 'वासरस्य तृतीयांश'इति अपराह्णैकदेशसहितसायाह्नकाले काण्वानां कुतुपकालस्य आवश्यकत्वाभावविवक्षया श्राद्धकर्तव्यताविधानात् । अमावास्यायाः तृतीयभागस्य अपराह्णकालस्य ज्ञापकाभावः। अत एव 'नातिसंध्यासमीपत' इति पिंडान्वाहार्यकश्राद्धस्य अतिसन्ध्यामीपकाले कर्तव्यतोक्ता ।

एवमपराह्णसंबन्धेनाऽमा निर्णेया ।

भूतविद्धा[2]प्यमावास्या प्रतिपन्मिश्रिताऽपि वा ।
पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतुपकालिकी ।।

इति हारीतोक्तौ 'भूतविद्धाप्यमावास्या' इत्ययमंशस्तु यदा पूर्वदिने चतुर्दशी चतुर्दशघटिका द्वितीयदिनेऽमावास्या विंशतिघटिका तदा।

भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा ।
श्राद्धकर्मणि ये कुर्युस्तेषामायुः प्रहीयते ।।

इति निषेधप्राप्तौ पूर्वदिनग्राह्यत्वमात्रपरः। निषेधवाक्यं तु चतुर्दश्यां कुतुपकालव्याप्तित्वाभावे ज्ञेयम् । उभयत्र कुतुपकालव्याप्तित्वे तु परदिने अपराह्णस्पर्शाभावे पूर्वा ।

अपराह्णे पितृणां तु याऽपराह्णानुयायिनी ।
सा ग्राह्या पितृकार्येषु .......' ।।

१. दिवसस्य प्रातःसङ्गवमध्याह्नापराह्नसायाह्नरूपेण पञ्चधा भेद इति ।

२. भूतविद्धा परविद्धा ।

इत्युक्तेः पूर्वदिने अपराह्णसंबन्धात् ।

एवमेतद्वाक्यबलादेव यदा चतुर्दशी विंशतिघटिका परदिने अमावास्या चतुर्दशघटिका तदाऽपि पूर्वैवेति सिद्धं भवति । अस्मिन्पक्षे 'भूतविद्धाममावास्यामि'ति निषेधस्तु न ।

प्रतिपद्यप्यमावास्या पूर्वाह्णव्यापिनी यदि ।
भूतविद्धैव सा ग्राह्या पित्र्ये कर्मणि सर्वदा ।।
- इति विशेषवचनात् ।

उभयत्र कुतुपकालव्याप्तित्वेऽपि अपराह्णसम्बन्धेऽपि अल्पत्व-महत्वाभ्यां निर्णयः ।

अल्पापराह्णे त्याज्या मा ग्राह्या यस्त्वधिका भवेत् ।
- इति विशेषवचनात् ।

उभयत्र संपूर्णसाम्ये एकदेशसाम्ये जाबालिराह -

अपराह्णद्वयव्यापी यदि दर्शस्तिथिक्षये ।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता । - इति ।
दृष्टेन्द्वमा [१] सिनीवाली याऽदृष्टेन्दुकला कुहूः ।। - इति ।

उत्तरत्र निरग्न्यादेरित्युक्तेः । आहिताग्निशब्देन साग्निको ग्राह्यः ।

'ग्राह्या कुतुपकालिकी'त्यत्र कुतुपशब्देनाह्नोऽष्टममुहूर्तो मुख्यः ।

---

१. दृष्टेन्द्विति । यस्याममायां चन्द्रमा दृश्यते सा सिनीवाली । यस्यां चन्द्रस्य कला न दृश्यते सा कुहूः । तथा चामरः - 'सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः' इति ।

नारदः -

सप्तमात्परतो यस्तु नवमात्पूर्वतः स्थितः।

उभयोरपि मध्यस्थः कुतुपः स उदाहृत ।। - इति ।

तथा -

प्रविश्य भानुः स्वं स्थानं शंकुवद्यत्र [१] तिष्ठति ।

स कालः कुतुपो नाम मन्दीभूतस्य संज्ञया ।।

मत्स्यपुराणे च -

अह्नो मुहूर्ता [२] विख्याता दशपञ्च च सर्वदा ।

तत्राष्टमो मुहूर्तो यः स कालः कुतुपः स्मृतः ।।

कुतुपेन सहचरितमुत्तरमुहूर्तद्वयमपि कुतुपशब्देनोक्तं आपस्तम्बेन -

कुतुपाद्यान्मुहूर्तांस्त्रीन्यदा चरति भास्करः ।

स कालः कुतुपस्तत्र पितृणां दत्तमक्षयम् ।। - इति।

तथा नारदोऽपि -

मध्याह्नात् त्रिमुहूर्तं तु यदा चलति भास्करः।

स कालः कुतुपो नाम पितृणां दत्तमक्षयम् ।।

- इति ।

संपूर्णसाम्ये तु परैव । कुतुपकालव्याप्तेराधिक्यात् । यदा तु परदिने मध्याह्नमध्य एव अमावास्या पूर्वदिने मध्याह्नानन्तरमेव अमावास्या तदा परैवेति ज्ञापयितुं प्रतिपन्मिश्रितैवेत्युक्तम् । पूर्वदिने

---

१. 'स्थाणुरस्त्री ध्रुवः शंकुः' इत्यमरः ।

२. मुहूर्तशब्दस्य घटिकाद्वयमित्यर्थः ।

अपराह्णव्यापित्वेऽप्यमावास्यायां कुतुपस्य प्राधान्यात् परदिने कुतुपकालव्याप्तेः। तथा च जाबालिः -

पूर्वाह्णे चेदमावास्या नापराह्णे भवेद्यदि।
प्रतिपद्यपि कर्तव्यं श्राद्धं श्राद्धविदो विदुः ।। - इति।

## ।। अथ प्रतिपत्सांवत्सरिकश्राद्धनिर्णयः ।।

व्याप्तास्ते द्व्यहगापराह्णसमये नास्त्येव सामा यदि
ग्राह्या पूर्वदिने क्षयो यदि तिथेर्वृद्धौ तु साम्ये परा ।
या तुल्या द्व्यहगापराह्णलवयुग्ह्रासादिकं चोत्तरा ....
- इति कालनिर्णये ।

अथ मतान्तरं -

सायन्तन्यपरत्र चेन्मृततिथिः सैवाब्दिके मासिके
ग्राह्या सा ह्यपराह्णयोर्यदि तदा यत्राधिका सा मता ।
तुल्या चेदुभयापराह्णसमये पूर्वा न चेत्तदृद्वये
पूर्वैव त्रिमुहूर्तगास्तसमये नो चेत्परैवोचिता ।।

दिवसं प्रातःसंगवमध्याह्नापराह्णसायाह्नभेदेन पंचधा विभजेत् । तत्र सूर्योदयमारभ्य आसायाह्नं मृततिथिः स्पृशेच्चेत्सा तिथिः पार्वणश्राद्धे उत्तमा । तदभावे अपराह्णव्याप्ता । तदभावेऽपि दिन-द्वयमध्ये यत्राधिका अपराह्णैकदेशव्याप्तिः सा ग्राह्या । एकदेश-व्याप्तिसाम्ये संपूर्णव्याप्तिसाम्ये मृततिथ्यपेक्षयोत्तरतिथिक्षये पूर्वविद्धा मृततिथिर्ग्राह्या । वृद्धौ तूत्तरविद्धा । एवं दिनद्वये मृततिथेरपराह्णे

स्पर्शाभावेऽपि क्षये पूर्वविद्धा । वृद्धौ तूत्तरविद्धा मृततिथिर्गाह्या ।
मृताहस्य तिथिर्या तु चापराह्णद्वये यदि ।
पूर्वा क्षये तु कर्तव्या वृद्धौ कार्या तथोत्तरा ।।

## ।। अथ मन्वादयश्चतुर्दश ।।

चैत्रशुक्लतृतीया पूर्णमा च (२)।। ज्येष्ठे पूर्णिमा (३) ।। आषाढे शुक्लदशमी पूर्णिमा च (५)।। श्रावणे कृष्णाष्टमी (६)।। भाद्रपदे शुक्लतृतीया (७)।। आश्वयुजे शुक्लनवमी (८)।। कार्तिके शुक्लद्वादशी पूर्णिमा च (१०)।। पौषे शुक्लैकादशी (११)।। माघे शुक्लसप्तमी (१२)।। फाल्गुने पूर्णिमाऽमावास्या च (१४)।।

## ।। युगादयश्चत्वारः।।

वैशाखे शुक्लतृतीया (१)।। भाद्रपदे कृष्णत्रयोदशी (२)।। कार्तिके शुक्लनवमी (३)।। माघे पूर्णिमा (४)।।

अथ शुक्लपक्षे द्वादशमन्वादयः त्रयो युगादयः। एते दैवे पित्र्ये च कर्मणि पूर्वाह्णव्यापिनो ग्राह्याः। उर्वरितमन्वादिद्वयमेकं च युगादि एतत्त्रयं कृष्णपक्षस्थत्वादपराह्णव्यापि ग्राह्यम् ।
पूर्वाह्णे तु सदा कार्या शुक्ला मनुयुगादयः।
दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिकी ।।
- इति पाद्मोक्तेः।

यत्तु -

द्वे शुक्ले द्वे च कृष्णे तु युगादी कवयो विदुः ।
शुक्ले पौर्वाह्णिकी ग्राह्या कृष्णे चैवापराह्णिकी ।।

- इति नारदीयवचनम् ।

दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम् ।

इति भविष्यत्पर्ववचनोक्तरीत्या युगादिद्वयस्य कृष्णपक्षस्थत्वाभिप्रायेण प्रवृत्तमिति बोध्यम् ।।

## ।। अथ संक्रान्तयो [१] द्वादश ।।

तत्र [२] मेषतुलयोः पूर्वोत्तरभागयोर्दश घटिकाः पर्वकालः। कर्काटके पूर्वभाग एव त्रिंशद्घटिकाः। मकरसंक्रान्तौ परभाग एव चत्वारिंशद्घटिकाः। 'त्रिंशत्कर्काटके नाड्यो [३] मकरे तु दशाधिका' इति वचनात् । वृषभसिंहवृश्चिककुम्भेषु पूर्वभागे उत्तरभागे च [४] षोडशघटिकाः मिथुनकन्याधनुर्मीनेषु पराः षोडशघटिकाः पर्वकालः। अयं निर्णयः दिवा संक्रान्तौ सत्याम् ।

---

१. वृषसिंहवृश्चिककुम्भेषु संक्रान्तिः विष्णुपदसंज्ञा । मिथुनकन्याधनुर्मीनेषु संक्रान्तिः षडशीति संज्ञा । मेषतुलयोर्विषुवसंज्ञा । कर्कमकरयोरयनसंज्ञा ।

२. तत्र पूर्वतो परतोऽपि संक्रमात् पुण्यकालघटिकास्तु षोर्शति सामान्यतः पुण्यकालः सर्वैरुक्तः । विशेषस्तूच्यते वक्ष्माण प्रकारेण ।

३. नाड्यः घटिकाः ।

४. घटिकाद्वयाद्यल्पदिनशेषे मिथुनकन्याधनुर्मीनेष्वपि मकरेऽपि पूर्वा एव पुण्याः । प्रभाते घटिकाद्वयाद्यल्पकाले वृषसिंहवृश्चिककुम्भेष्वपि कर्केऽपि परा एव पुण्याः ।

रात्रौ तु विशेषः । तत्र कर्काटके अस्तमयादारभ्य सूर्योदय-पर्यन्तं यस्मिन्कस्मिंश्चित्कालविशेषे संक्रमे सति पूर्वदिवस एव स्नानदानादिकं नतु रात्रौ परदिने वा ।

मिथुनात्कर्कसंक्रान्तिर्यदा स्यादंशुमालिनः।
प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः ।।
- इति भविष्योत्तरपुराणे ।

अर्धरात्रे तदूर्ध्वं वा संक्रमे दक्षिणायने ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ।। - इति च ।

'यावन्नोदयते रविरि'त्यस्य 'तदूर्ध्वं वे'त्येतदनन्तरमन्वयः।

मकरे तु सूर्यास्तमयादूर्ध्वं रात्रौ यस्मिन्कस्मिंश्चित्कालविशेषे सूर्योदयपर्यन्तं मकरसंक्रमः। तदा परदिने सूर्योदयानन्तरमेव पर्व-कालः। न रात्रौ । न पूर्वदिने ।

कार्मुकं [१] तु परित्यज्य झषं [२] संक्रमते रविः।
प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि ।।
- इति भविष्योत्तरे ।

वृद्धगार्ग्योऽपि -

यदास्तमयवेलायां मकरं याति भास्करः ।
प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि ।। - इति।

---

१. कार्मुकं धनुः। तन्नामकराशिमित्यर्थः।

२. झषं मकरं । मकरराशिमिति यावत् ।

कर्काटकमकरसंक्रान्तिव्यतिरिक्तदशसंक्रमेषु रात्रौ जातेषु तु त्रेधा पर्वकालः। रात्रौ द्वितीययामान्त्यघटिका तृतीययामाद्यघटिका च । एवं मिलित्वा घटिकाद्वयमर्धरात्रः। ततः पूर्वभागे सूर्यास्तमयावधि मेषादिसंक्रमेषु पूर्वदिने मध्यादस्तमयपर्यन्तं पर्वकालः। अर्धरात्रात्परतः संक्रमेषु तु परदिने सूर्योदयान्मध्याह्नपर्यन्तं पर्वकालः। घटिकाद्वयरूपार्धरात्रमध्ये मेषादिसंक्रमेषु तु पूर्वोत्तरकालयोस्तावत्कालं पर्वकालः।

तदाह वृद्धवसिष्ठः -

अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् ।
रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः ।।
अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया ।
ऊर्ध्वं संक्रमणेषूर्ध्वमुदयात्प्रहरद्वयम् ।।
पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः ।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ।।

- इति ।

अह्नि संक्रान्तिर्यदा भवति तदा कृत्स्नस्याह्नः पुण्यत्वं विदधताऽनेन वचनेन अर्धरात्रौ स्नानदानादिकं प्रतिषिद्ध्यते । एवं सति उदयानन्तरक्षणभाविकर्काटके पूर्वभागे प्राशस्त्यं बाधित्वा उत्तरभागे अनुष्ठानं भवति । अस्तमयप्राचीनक्षणभाविनि मकरे च उत्तरभागप्राशस्त्यं परित्यज्य पूर्वभागे अनुष्ठानं कर्तव्यम् । कर्काटकमकरयोः पूर्वोत्तरभागप्राशस्त्यवचनं तु मध्याह्नादिसंक्रमविषयम् ।

ननु -

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कार्यं निशिकाम्यव्रतेषु च ।।

इति याज्ञवल्क्यस्मृतौ संक्रान्तौ रात्रावपि स्नानदानयोरुक्तत्वेन मकरकर्काटकयोः रात्रावपि स्नानदानप्राप्तेः वृद्धवसिष्ठेन सामान्यतः संक्रमेषु रात्रौ प्राप्तेषु पर्वकालविशेषमुक्त्वा मकरकर्कटयोः पर्युद-स्तत्वेन याज्ञवल्क्यवचनस्य तयोरेव प्राप्तेः। अनेनैवाशयेन माधवेन 'मकरे कर्कटे रात्रावप्याचारादनुष्ठितिः' इत्युक्तमिति चेत् सत्यम् । 'मिथुनात्कर्कसंक्रान्तिः', 'कार्मुकं तु परित्यज्य' इत्येतयोर्वाक्ययोः कर्काटकमकरौ स्फुटं गृहीत्वाऽह्नि स्नानदानयोः विधानात् प्राबल्यम् । 'राहुदर्शनसंक्रान्ती'त्यत्र तु पर्युदासेन कर्काटकमकरयोरनुमीयमानत्वेन अस्य वाक्यस्य दुर्बलत्वेन रात्रौ स्नानदानयोरनुष्ठानासंभवात् ।

यथा 'औदुम्बरी सर्वा वेष्टयितव्ये'ति स्मृत्यनुमितश्रुतेः 'औदुम्बरीं स्पृष्ट्वोद्गायेदि'ति स्पष्टश्रुत्यपेक्षया दौर्बल्यम् । अत एव कुमारस्मृत्यनुसारेण औदुम्बर्याः सर्ववेष्टनं न कार्यमित्युक्तम् । तथाऽत्रापि विशेषवचनानुसारेण अह्न्येव स्नानदानादिकं कार्यम् । 'राहुदर्शन संक्रान्ती'त्यादिवचनं तु देशान्तरविषयं युगान्तरविषयं वा । अथवा राहुदर्शनस्य संक्रान्तिः संबन्धः प्रत्यक्षेण राहुदर्शन-प्राप्तिरितियावत् । तस्यां निशि स्नानं न तु एकांगुलाद्यनुमानिक-ग्रहणज्ञाने ।

एवं -

ग्रहणोद्वाहसंक्रान्तियात्रातिप्रसवेषु च ।

श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते ।।

इत्यत्रापि उद्वाहसंक्रान्तिर्विवाहसंबन्धः तस्मिन्निति एकपदत्वेन अर्थो बोध्यः।

ननु - 'मिथुनात्कर्कसंक्रान्तिरि'ति वाक्ये रात्रावित्येव वक्तव्ये प्रभाते वा निशीथे वेति रात्रिविशेषग्रहणं किमर्थं । तथा 'कार्मुकं तु परित्यज्ये'त्यत्रापि 'रात्रावि'ति विहाय 'प्रदोषे वाऽर्धरात्रे वे'ति ग्रहणं व्यर्थमिति चेत् । शृणु । भविष्योत्तरपुराणे सामान्यतो अर्धरात्रात्पूर्वभागे संक्रमणे पूर्वदिवसे प्रहरद्वयं पर्वकालमुक्त्वा ऊर्ध्वसंक्रमणे तु परदिने प्रहरद्वयं पर्वकालमुक्त्वा मकरकर्कटाविति मकरकर्कटयोः पर्युदासे कृते मकरकर्कटयोरेवावस्थायां कथं पर्व-काल इत्याशंक्य कर्काटकस्य परतः संक्रमेऽपि परदिने पर्वकालं व्यावर्तयितुं 'प्रभाते' इति रात्र्यवधिरुक्तः। 'निशीथ'ग्रहणं तु दिनद्वयेऽपि पर्वकालं व्यावर्तयितुम् । तथा मकरेऽपि अर्धरात्रात् पूर्वं संक्रमे पूर्वदिने पर्वकालव्यावृत्त्यर्थं प्रदोषे अवधिरुक्तः। अर्धरात्रग्रहणं तु उभयत्र पर्वकालव्यावृत्त्यर्थम् ।

तथाचायं निष्कृष्टार्थः। कर्कटे प्रहरचतुष्टयात्मिकायां रात्रौ यदाकदापि संक्रमे पूर्वदिन एव पर्वकालः। अर्धरात्रात्पूर्वभागानु-क्तिस्तत्सिद्धत्वात्। एवं मकरे रात्रौ यदाकदापि संक्रमे परदिन एव पर्वकालः। अर्धरात्रात्परदिनानुक्तिस्तु मकरे परभागे पर्वकालस्य

सिद्धत्वादिति दिवा संक्रान्तौ संक्रान्तिसामीप्यक्रमेण उत्तररात्रौ तारतम्यं ज्ञेयम् । रात्रौत्वर्धरात्रात्पूर्वं मेषादिसंक्रमे दिवास्तमय-सामीप्यक्रमेण उत्तमत्वादिपर्वकालो ज्ञेयः। अर्धरात्रात् परश्चेत् सूर्योदयसामीप्यक्रमेण ज्ञेयम् । अर्धरात्रसंक्रमे तूभयत्र ज्ञेयम् ।

## ।। अथ ग्रहणनिर्णयः[१] ।।

चन्द्रग्रहणे ग्रहणप्रहरक्षणात्पूर्वं प्रहरत्रयं न भुंजीत । सूर्य-ग्रहणे तु यामचतुष्टयम्। चन्द्रस्य ग्रस्तोदये तु संपूर्णमहर्न भुंजीत । ग्रस्तास्तमये तु रात्रौ चन्द्रोदये सति दृष्ट्वा दिवा स्नात्वा भुंजीत । पूर्वरात्रौ चन्द्रग्रहे सार्धप्रहरमध्ये मोक्षश्चेत् राहुमुक्तचन्द्रं दृष्ट्वा स्नात्वा ताम्बूलादिकं गृह्णीयात् । राहुस्पर्शारम्भकाले स्नायात् । ग्रस्ते जप-होमादिकं कुर्यात् । मुच्यमाने दानश्राद्धादिकं कुर्यात् । प्रथमयाम-ग्रहणे तु अहर्भोजनं न कार्यम् । मुक्तौ स्नानं विना ताम्बूलादि-चर्वणनिद्रादिकं न कार्यम् । एवं सूर्यग्रहणेऽपि ।

जातसूतकमृतसूतकिनां तु यावद्ग्रहणं सूतकाभावात् तावत् पर्यन्तं जपाद्यधिकारः। रजस्वलानां तु नद्यादितीराद्बहिरुद्धृतोदकेन शूर्पादिना [२] स्नानम् । ग्रस्तास्तमानसूर्यग्रहे तु अहोरात्रं उपवसेत् । मन्त्रसिद्धिकामः यतिश्च पुत्ररहिता स्त्री च ग्रहणद्वयेऽपि उपवसेत् ।

---

१. चन्द्रसूर्यग्रहणं यावच्चाक्षुषदर्शनयोग्यं तावान् पुण्यकालः ।

२. शूर्पादि । शूर्पपात्रं कर्णाटके प्रसिद्धमिति भाति । 'प्रस्फोटनं शूर्पमस्त्री'' इत्यमरः।

तथाऽयनद्वये विषुवद्वये उपवसेत् । अयनद्वयं मकरकर्कटौ । विषुवद्वयं तुलामेषौ । स्त्रीपुंसयोः पुत्रवत्त्वे तु नोपवासः। सर्वग्रासे उपवास इत्यत्र प्रथमयामग्रहणे अहर्भोजनं न कार्यमित्यत्र च मूलप्रमाणं चिन्त्यम् । अयं भोजननियमो बालवृद्धातुरान्विना बोध्यः। तेषां तु ग्रहणक्षणापेक्षया द्वादशघटिकायाः पूर्वभागे भोजनं कर्तुं शक्यम् । तन्मध्ये [१] भोजनं न । तथा च स्मृतिः -

अपराह्णे न मध्याह्ने मध्याह्ने न तु संगवे ।
भुंजीत संगवे चेत्स्यान्न पूर्वं भुजिमाचरेत् ।।

सूर्यग्रहण इति शेषः। 'न मध्याह्न' इत्यस्य 'भुंजीत' इत्यनेनान्वयः। 'चेत्स्यादि'त्यस्य 'अपराह्णे' 'मध्याह्ने' इत्येताभ्यां अन्वयः।

## ।। अथाष्टकाः।।

भाद्रपदमार्गशीर्षपौषमाघफाल्गुनेषु पंचमासेषु कृष्णपक्षस्थाष्टम्यो अष्टका इत्युच्यन्ते । ताः अपराण्हव्यापिन्यो ग्राह्याः । ततः पूर्वाः सप्तम्यस्ततः परा नवम्यश्चाष्टम्यनुसारेण ग्राह्याः । तत्र अपरांण्हनियमो नास्ति । नवम्यस्त्वन्वष्टकसञ्ज्ञाश्च । पञ्चमासेषु सप्तम्यादितिस्त्रोऽष्टका इत्युच्यन्ते । श्रीमद्भागवतसप्तमस्कन्धतात्पर्ये तु चतस्त्रोऽष्टका इत्युच्यन्ते ।

सप्तम्यादित्रयं चैव तथा चैव त्रयोदशी ।
चतस्त्रस्त्वष्टकाः प्रोक्ताः [२] ... ।। - इति व्यासस्मृतेः।

---

१. तन्मध्ये द्वादशघटिकामध्ये ।

२. 'सर्वपक्षाद्विशेषतः' इति चतुर्थपादः । भागवततात्पर्ये स्कं.७ अ.१५ ।

## ।। अथ प्रतिपदादिसामान्यतिथिनिर्णयः ।।

स्नानदानादावुदयव्यापिन्यः ।

यां तिथिं [१] समनुप्राप्य चोदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानादिकर्मसु ।।

- इत्युक्तेः ।

दन्तधावनस्त्रीसंगादौ कर्मकालव्यापिनी तिथिर्ग्राह्या ।

**अनध्याये तु -**

वृद्धौ साम्ये क्षये चोषस्त्रिचतुःपञ्चनाडिकाः ।
षट्चतुस्तिसृभिः सायमनध्यायःप्रकीर्तितः ।।

- इत्युक्तेः ।

तिथिवृद्धौ प्रतिपदष्टम्योः परदिने प्रातःकाले घटिकात्रयावस्थितौ तद्दिनस्य अनध्यायत्वम् । साम्ये तु चतुर्घटिकावस्थाने क्षये पंच घटिकावस्थाने ज्ञेयं। तथा चतुर्दश्यष्टम्योः पूर्वदिने प्रवेशे तु तिथि- वृद्धौ सायंकालात्पूर्वं षट्घटिकाप्रवेशे पूर्वदिनस्य अनध्यायत्वम् । साम्ये तु चतस्रो घटिकाः, प्रवेशे क्षये च तिस्रो घटिकाः, प्रवेशे पूर्वदिनस्यानध्यायत्वं स्मृत्यर्थः ।

**प्रदोषे तु -**

चतुर्थी सप्तमी चैव त्रयोदश्यस्तमानतः ।
प्रदोषमपि कुर्वीत द्व्येकार्धघटिकाक्रमात् ।। - इत्युक्तेः ।

---

१. यां तिथिमिति । यस्यां तिथौ सत्यां भास्करः सूर्य उदयं प्राप्नोति सा स्नानदानादौ ज्ञेया ।

चतुर्थी अस्तमयात्पूर्वं घटिकाद्वयकाले गता चेत्तदा प्रदोषः । तदपेक्षया अधिककाले गता चेन्न प्रदोषः । न्यूनकाले गता चेत् प्रदोषः सिद्ध एव । एवं सप्तम्यामेकघटिकाकाले प्रदोषत्वम् । तथा त्रयोदश्यां अर्धघटिकाकाले प्रदोषत्वं ज्ञातव्यमिति स्मृत्यर्थः ।
एवं -

षष्ठी च द्वादशी चैवार्धरात्रोननाडिका ।
प्रदोषमपि कुर्वीत तृतीया नवनाडिका ।।

इत्यस्याप्ययमर्थो बोध्यः । तृतीया नवनाडिकेत्यतः परं रात्राविति शेषः। तथा युगादिमन्वाद्यनध्यायात्पूर्वदिने रात्रौ वेदवेदान्ताद्यध्ययने प्रदोषः।

## ।। अनध्यायास्तु ।।

प्रतिमासे शुक्लपक्षे कृष्णपक्षे च चतुर्दश्यादित्रयमष्टमी च । मन्वादयो युगादयोऽष्टका अन्वष्टकाः। मेषतुलौ मकरकर्कटकौ । तथा आषाढकार्तिकफाल्गुनेषु कृष्णपक्षद्वितीया बोध्याः। भाद्रपदकृष्णपक्षे प्रेतद्वितीया महाभरणी च पितृमातृश्राद्धदिनं सन्ध्यागर्जनदिनम् ।।

।। इति सामान्यतिथिनिर्णयः।।

## विशेषतिथिनिर्णयस्तु -

### ।। चैत्रमासः ।।

चैत्रशुक्लप्रतिपदुदयव्यापिनी ग्राह्या । तत्र संवत्सरादित्वात् अवश्यं अभ्यंगादिकं कार्यम् । अकरणे प्रत्यवायोक्तेः ।

वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते ।।

- इति वृद्धवसिष्ठोक्तेः।

दिनद्वये तद्व्याप्तावव्याप्तौ वा पूर्वैव । चैत्रमासे अधिकमासप्राप्तौ तु मलमासे [१] एव प्रतिपद्यभ्यंजनादिकं कृत्वा पंचांगस्थराजमन्त्र्यादिफलं श्रोतव्यम् ।

तथा च ज्योतिःशास्त्रे -

संवत्सरे चात्र वसन्तसंज्ञके ऋतौ मलाख्यश्च तदन्यसंज्ञकः।
मासो भवेत्तत्र शुभेप्सुभिर्नरैः श्रोतव्यमाद्ये नृपमन्त्रिसत्फलम्।।

इति । अस्यार्थः। तदन्यसंज्ञकः मलान्यनिजचैत्रनामकः। तत्र तयोर्मध्ये आद्ये [२] मलमासे ।

चैत्रशुक्लद्वितीया श्रीमद्वेदव्यासस्वामिनां पुण्यतिथिः। सा तु पूर्वाह्णिकी ग्राह्या।। तृतीया मन्वादिः। तस्यां सशंकरगौरीं पूजयेत्। सा उदये मुहूर्तमात्रापि ग्रह्या । तदभावे पूर्वविद्धा । इयमेव

---

१. 'शुक्रादर्मलमासस्य सोऽन्तर्भवति चोत्तरे' इत्यादि वचनात्, अग्रिमवर्षान्तःपातात् मलमासमारभ्यैव वर्षप्रवृत्तेः शुक्रास्तादादिव मलमासे एव वत्सरारम्भः ।

२. आद्ये अधिकचैत्रे ।

मत्स्यजयन्ती ।। चैत्रशुक्लनवमी रामनवमी । सा मध्याह्नव्यापिनी ग्राह्या । पुनर्वसुयुता चेद्विशेषफलप्रदा । तस्यां नोपवसेत् ।

सर्वासां तु जयन्तीनां श्रेष्ठा कृष्णाष्टमी मता ।
तस्मात् सन्निहिताऽत्यन्तं तत्रैवोपवसेन्नरः [१]।।
सर्वास्वपि जयन्तीषु पूजा कार्या विशेषतः।।

- इति भारद्वाजसंहितायाम् ।

कृष्णजयन्तीव्यतिरिक्तासु उपवास निषेधात् ।

विष्णुपंचके तु पंचोपवासाः। शुक्लकृष्णैकादश्योः सूर्योदये चतुर्दशीवेधरहितप्रहरव्यापिन्यां पौर्णमास्यां प्रहरद्वयव्यापिन्युत्तराषाढावेधरहितश्रवणे चतुर्दशीवेधरहितसूर्योदयस्पर्शिदर्शे चेति । उदयद्वयस्पर्शि श्रवणे नोपवासः ।। इयं कवीन्द्रतीर्थानां पुण्यतिथिः ।। दशम्यां तु वैशाखस्नानारम्भः।।

एतत्प्रसंगात् सर्वदशम्यादितिथित्रयनिर्णयः क्रियते। दशमीविद्धैकादशी नोपोष्या ।

सूर्योदयादधश्चोर्ध्वं [२] द्वादशी दृश्यते यदि ।
तस्य प्राक्पादमात्रे तु नाश्नीयाद्धरिवासरे ।।

वेधो द्विविधः। सूर्योदयवेधः अरुणोदयवेधश्च । तत्र पूर्वा स्मार्तैः नोपोष्या। तथा एकादशीवृद्धौ सूर्योदये वेधाभावेऽपि सा नोपोष्या।

---

१. उपवसेदिति । कृष्णावतारस्याधुनिककालसमीपत्वात् ।

१. सूर्योदयादधः सूर्योदयात्पूर्वम् ।

वैष्णवानां तु अरुणोदयकाले एकादश्यां दशमीकलादिसंबन्धे सति दशमीविद्धत्वात् तस्यां नोपवासः।

अरुणोदयकालस्तु -

चतस्रो घटिकाः प्रातररुणोदय उच्यते ।
उदयात्प्राग्यदा विप्रा मुहूर्तद्वयसंयुता ।।

इत्यादिवचनात् सूर्योदयात्प्राक् घटिकाचतुष्टयकालः । सोऽधिकश्च ग्राह्यः। दक्षिणायने रात्रिमानस्याधिक्यात् घटिकाचतुष्टयादधिकं तथा च मुहूर्तद्वयं भवतीति ।

अतो विद्याधीशस्वाम्यनुज्ञया । पञ्चपञ्चाशद्घटिका पंचाशत्पलसंयुता दशमी चेत् सा एकादशी विद्धा । तदपेक्षया एकपलन्यूना चेन्न विद्धा । इदं दशम्यादित्रयं आर्यभट्टानुसारेण ज्ञेयम् ।

सर्वधर्मेषु कः श्रेयान्विष्णुधर्मेषु योऽधिकः ।

- इति स्मृतेः।

अस्यार्थः। कः ब्रह्मपक्षः अनध्यायादिनिर्णयेषु श्रेयान् ग्राह्य इत्यर्थः। विष्णुधर्मेषु दशम्यादित्रयविष्णुपञ्चकजन्माष्टम्यादिषु यो अधिकः पक्षः आर्यभट्टसिद्धान्ते श्रेयानित्यर्थः। ब्रह्मसौराऽऽर्यसिद्धान्तेषु त्रिषु आर्यसिद्धान्तस्याधिक्यात् । इदं तु आर्यभट्टशास्त्ररीत्या गणकसत्वे ज्ञेयम् । गणकाभावे आर्यभट्टपंचांगानुसारेण दशम्यादिदिनत्रयं ग्राह्यं । तदभावे तु सौरपक्षपंचांगे एकादश्यादीनां दशम्याद्यपेक्षया पंचषड्घटिकादिरूपातिवृद्धौ सत्यां द्विपंचाशद्-

घटिका दशमी किंचिदधिका किंचिन्न्यूना चेत्तदाऽऽर्यभट्टरीत्या पञ्चाशत्त्वं भविष्यतीत्यनुमाय एकादश्या दशमीवेधो ज्ञेयः । तथा घटिकाद्वयवृद्धौ त्र्यधिकपञ्चाशद्धटिका दशमी चेत्तदा एकादश्या वेधो ज्ञेयः। साम्ये च क्षये वा चतुःपञ्चाशद्धटिका किञ्चिन्न्यूना वा चेत्तदा दशमीवेधः । एवं द्वादश्यामपि सौरपक्षस्य पञ्चाङ्गदृष्ट-घटिकास्वतिवृद्धौ घटिका चतुष्टयं स्वल्पवृद्धौ घटिकात्रयम् । उत्तरतिथ्यपेक्षया साम्ये क्षये वा घटिकाद्वयं संयोज्य साधनद्वादशी ज्ञेया ।।

## ।। अथ श्रवणद्वादशी ।।

श्रवणद्वादशीयोगो मध्याह्नादूर्ध्वमप्यणु ।
उत्तराषाढरहिता उपवासो विधीयते ।।

इति वचनात् तत्तकालिकदिनमानानुसारेण मध्याह्नक्षणापेक्षया परत उदयकाले उत्तराषाढसम्बन्धरहितश्रवणेन द्वादश्या योगश्चेत्तदा श्रवणद्वादश्युपवासः। उदयद्वयश्रवणसत्वे किञ्चिन्न्यूने वा श्रवण-द्वादश्युपवासो अस्त्येव ।

एकोनषष्टिघटिका तथा त्रिंशत्पलाधिका ।
श्रोणा च पौर्णमासी च नोपोष्या विष्णुतत्परैः।।

इति वचनं तु न श्रवणद्वादशीविषयम् । किन्तु विष्णुपञ्चककेवल-श्रवणोपवासविषयम् । केवलश्रवणग्रहणात्पौर्णमासीसाहचर्याच्च ।

उदयस्पर्शिनी दर्शा पूर्णिमा या तु यामिका ।
मध्याह्नव्यापिनी श्रोणा वोपोष्या विष्णुतत्परैः।।

## ।। अतिरिक्तोपवासनिर्णयः ।।

दशमी वेधहीना तु परतो द्वादशी यदि ।
उपवासद्वयं कार्यमन्यथा निरयं व्रजेत् ।।

इति वचनात् । एकादश्या दशमीवेधाभावे सति द्वादश्यां षष्टि-घटिकायां च सत्यां परदिने पुनः स्वल्पमात्रद्वादश्युर्वरिता चेत् तदोपवासद्वयं कार्यम् ।

कला वा घटिका वा स्यात्परतो द्वादशी यदि ।
द्वादशद्वादशीर्हन्ति परेद्युः पारणे कृते ।।

- इति कृष्णामृतमहार्णवे।

द्वादश्यामतिरिक्तायां यो नोपोष्यात्सुमन्दधीः ।
द्वादश द्वादशीर्हन्ति द्वादशी चातिलङ्घिता ।।

- इति च कृष्णामृतमहार्णवे ।

अतिरिक्ता द्वादश्युपावासाकरणे साधनद्वादशीमध्ये भोजना-करणे च द्वादशसंख्याकद्वादशीषु यत्फलमुक्तं तन्नाश उक्तः।

साधनद्वादश्यां प्राप्तायां ततः पूर्वरात्रेर्भागत्रयं कृत्वा तृतीय-भागे प्रातःस्नानं कृत्वा प्रातःसन्ध्यावन्दनार्घ्यं दत्वा अर्घ्यानन्तरं ब्रह्मयज्ञं देवर्षिपितृतर्पणं च कृत्वा सूर्योदयात्पूर्वमेव जपौपासन-माध्याह्निकसन्ध्यादिकं सर्वं कृत्वा सूर्योदयानन्तरं सूर्यं दृष्ट्वा द्वादशी-मध्य एव पारणं कार्यं । अत एवापस्तम्बवेदे ब्रह्मयज्ञकालो महारात्र उषसीत्युक्तः। स्वल्पद्वादशीव्यतिरिक्तदिवसे महारात्रोषसोः ब्रह्मयज्ञ-कालत्यागप्रसक्तेः।

तथा -

द्वादशीं श्रवणोपेतां यो नोपोष्यात्सुमन्दधीः।
पंचसंवत्सरकृतं पुण्यं तस्य विनश्यति ।।

इति तत्रैव पापाधिक्योक्तेः। अतिरिक्तद्वादश्यपेक्षया श्रवणद्वादश्यधिका । श्रवणद्वादश्यपेक्षया एकादशी तु महाधिका ।

वरं स्वमातृगमनं वरं गोमांसभक्षणम् ।
वरं हत्या सुरापानमेकादश्यन्नभोजनात् ।।

इत्यादिभिरेकादश्यां भोजने महाप्रत्यवायोक्तेः।

## ।। अथ हरिवासरः।।

एकादश्याः प्रान्त्यभागो द्वादश्याः पूर्वमेव च ।
हरिवासरो विज्ञेयस्तत्र भुक्तिर्हि दोषकृत् ।।

इति वचनस्य अयमर्थः। यदा दशमीविद्धैकादशी भवति तदा तद्दशम्यां अरुणोदये विद्यमानैकादशी सूर्योदयानन्तरं विद्यमानैकादशी च मिलित्वा यावत्यो घटिका जायन्ते तासां भागचतुष्टयं कृत्वा तत्र चतुर्थे भागे भोजनौपासनतर्पणादिकं न कार्यं । तथा एकादश्यां रात्रिशेषे यावद्धटिका द्वादशी वर्तते उदयानन्तरं च यावद्धटिका द्वादशी तदुभयं मिलित्वा भागचतुष्टयं कृत्वा प्रथमभागे यावत्यो घटिका एकादशीरात्रौ गतास्ता विहाय सूर्योदयानन्तरमुर्वरितघटिकासु तर्पणोपासनभोजनानि न कार्याणि । एवं एकादशी श्रवणद्वादश्यतिरिक्तद्वादशीकृष्णजन्माष्टमीनां हरिप्रियदिनत्वेन हरिदिनशब्दवाच्यत्वात् तत्र श्राद्धतर्पणोपासनादीनि न कार्याणि ।

तथा चोक्तम् । मैत्रावरुणोपनिषदि - 'अथेदानीं ज्ञानोपसर्गा राजन् मोहजालस्यैते वै योनिरि'त्युक्त्वा कांश्चिदज्ञानोपसर्गानुक्त्वा 'अथ ये चान्ये व्रतविलोपिनो विकर्मस्था हरिदिने ह वै नित्यनैमित्तकादिश्राद्धहोमतर्पणादिकारिण' इत्यादीनां तत्वज्ञानोपसर्गेषु मौंजीव्रतादिलोपवेदादिविरुद्धकर्मस्थत्वादिना एकादश्यादौ श्राद्धाधिकारित्वादीनां समानत्वेन परिगणिततत्वात् ।

श्रुतिवाक्यार्थस्त्वयं । अथ ज्ञानोपसर्गाः। अथ तत्त्वज्ञानोपदेशानन्तरं तत्त्वज्ञानविघ्नकारिण उच्यन्ते। हे राजन् एते वक्ष्यमाणाः मोहजालस्य मिथ्याज्ञानसमूहस्य योनिः कारणं भवन्तीति शेषः। अथ ये चान्ये पुरुषा व्रतलोपिन एकादशीव्रतमौंजीव्रतादिनाशकाः विकर्मस्थाः वेदादिनिषिद्धकर्मनिष्ठाः ह वै अतिप्रसिद्धे हरिदिने एकादश्यादौ नित्यश्राद्धकरणे प्रत्यवायोपेतं मातापित्रोः प्रतिसांवत्सरिकादिश्राद्धं नैमित्तिकं संक्रान्तिव्यतीपातादिकादाचित्कनैमित्तिकश्राद्धं । आदिशब्देन काम्यश्राद्धं । नित्यहोमः औपासनाग्निहोत्रादिः नैमित्तिकः संक्रान्त्यादिनिमित्तहोमः। काम्यः रोगपरिहारादिनिमित्तकः। तथा नित्यतर्पणं ब्रह्मयज्ञानन्तरं क्रियमाणं नैमित्तिकं संक्रान्त्यादिनिमित्तकं काम्यतर्पणं पुरश्चरणादिनिमित्तकं । आदिशब्दात् श्राद्धभोजनादिकं । एतत्कारिण इत्येतेषां ज्ञानोपसर्गत्वं नाम तादृशेषु तत्त्वज्ञानं नोपपद्यते । उत्पन्नं च न तिष्ठतीत्यर्थः। एवं दशमीद्वादशीहरिवासरकालस्यापि हरिदिनत्वात् तत्र पितृतर्पणादिहोमश्राद्धाद्यकरणे इदमेव प्रमाणम् ।

स्मृतिकौस्तुभे अस्मत्पितृचरणकृतस्मृतिसंग्रहे च ज्ञेयानि ।

हारीतस्मृतौ -

पित्रोः श्राद्धं न कुर्वीत नोपवासदिने क्वचित् । - इति ।
नोपवासदिने इत्येतत्तु श्रवणद्वादश्यतिरिक्तद्वादशीजन्माष्टमीनां संग्रहार्थम् ।

दत्तात्रेयसंहितायां च -

एकादश्यां यदा ब्रह्मन् ब्राह्मणो म्रियते यदि ।
मन्त्रतः सकलं कार्यं पुत्रैस्तस्यौर्ध्वदेहिकम् ।।
प्रेताहुतिर्न होतव्या न पिंडं न तिलांजलिम्।
द्वादश्यां सकलं कार्यं विधिरेष सनातनः ।।
यथाऽऽहिताग्निर्विप्रः स्यान्नाग्नौ होमं समाचरेत् ।
नैवं तु कर्मलोपः स्याद्विधिरेष सनातनः ।।

- इति ।

नन्वेतस्याः स्मृतेः 'सायंप्रातरग्निहोत्रं जुहुयादि'ति श्रुतिविरोधेन अप्रामाण्यम् । अस्यां श्रुतौ सायंकाले प्रातःकाले च जीवनवतो अग्निहोत्रविधानात् । एकादश्यां होमाभावे तद्विरोधापत्तेः। यथा औदुम्बर्याः सर्वावेष्टनस्मृतेः औदुम्बरीस्पर्शविधायकश्रुतिविरोधेन अप्रामाण्यं तथेति चेन्न । वैषम्यात् । अत्र सामान्यतः सायंकाले प्रातःकाले च अग्निहोत्रविधानेन विशेषेण एकादश्यादिहोमनिषेधेन बाधसंभवात् । उत्सर्गापवादन्यायात् । औदुम्बरीशाखायाः सर्ववेष्टनस्पर्शयोः असंभवेन तत्र स्मृतेरप्रामाण्यस्य

अवश्यमंगीकार्यत्वात् ।

नच सामान्यश्रुतेरप्यपौरुषेयत्वेन प्राबल्यात् कथं पौरुषेय-स्मृत्या बाध इति वाच्यम् । 'न हिंस्यात् सर्वाणि भूतानी'ति श्रुतेः जातकर्मादिसंस्कारेषु समिच्चरुहोमविधायकस्मृत्या बाधदर्शनात् । अन्यथा समिदाहरणादीनां हिंसात्मकत्वेन स्मृत्या श्रुतेः बाधानंगी-कारे गर्भधानादिस्मार्तकर्मविलोप प्रसंगात् ।

## ।। अथ दशम्यां संकल्पः ।।

दशमीदिवसे प्राप्ते व्रतस्थोऽहं जनार्दन ।
त्रिदिनं देव देवेश निर्विघ्नं कुरु केशव ।।
एकादश्यां निराहारः स्थित्वाऽहमपरे दिने [1]।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ।।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ।
प्रसीद सुमुखो देव ज्ञानदृष्टिप्रदो भव ।।

- इति।

दशम्यां नियमाः -

शाकं तैलं दिवा स्वापं पुनर्भोजनमैथुने [2] ।
उष्णोदकात्यम्बुपानं [3] दशम्यां वैष्णवस्त्यजेत् ।।

---

१. भोक्ष्यामि अपरे दिने द्वादश्यामित्यर्थः ।

२. स्वापं निद्रां पुनर्भोजनं मैथुनं च इति द्वन्द्वः।

३. उष्णोदकं च अत्यम्बु च तयोः पानं । तत्र उष्णोदकं न पेयं । अतिशयेन अम्बु च नाम शीतोदकं न पेयमिति यावत् ।

एकादशीनियमाः -

असकृज्जलपानं च दिवास्वापं च मैथुनम् ।
ताम्बूलं तुलसीभक्षमेकादश्यां विवर्जयेत् ।।

द्वादशीनियमाः -

शाकं मधु परान्नं च पुनर्भोजनमैथुने ।
चणकं च दिवास्वापं ताम्बूलं तिलपिष्टकम् ।।
कांस्यं तैलं पुनर्भुक्तं वर्जयेद्द्वादशीदिने।। -इति स्मृत्यन्तरे।

## ।। अथोपवासप्रसंगात् कृष्णाष्टमी निर्णीयते ।।

सा च श्रावणमासे कृष्णपक्षेऽष्टम्यर्धरात्रव्यापिनी ग्राह्या । दिनद्वयेऽर्धरात्रव्याप्तावव्याप्तौ वा परैवोपोष्या । इयमेव रोहिणीयुक्ता चेत् जयन्तीत्युच्यते । इयमेव बुधवारेण सोमवारेण वा युता चेद् विशेषफलप्रदा। उभयत्रार्धरात्रव्याप्त्यव्याप्तिपक्षे यत्र रोहिण्यादियोगाः सोपोष्या । उभयत्र रोहिणीयोगे परैवोपोष्या ।

सऋक्षापि न कर्तव्या सप्तमीसंयुताष्टमी ।
अविद्धायां सऋक्षायां जातो देवकिनन्दनः।।

- इति ब्रह्मवैवर्तोक्तेः।

'कार्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी'ति तु द्वितीयदिने रोहिणीयोगाभावे ज्ञेयं । अत्र आर्यभट्टशास्त्रेणैव ज्योतिर्विद्भिः अर्धरात्रादिवेधो ज्ञेयः। 'विष्णुधर्मेषु योऽधिकः' इत्युक्तेः। अर्धरात्र-व्याप्त्यव्याप्तिपक्षे परदिन उपवासस्तु कर्मकाले व्याप्तेः सत्वात् प्रदोषव्याप्तेर्ग्राह्यत्वोक्तेश्च ।

अत्र श्रीमदाचार्यैः उपवासदिने कर्माण्युक्तानि -

प्रातःकाले दन्तधावनादिकं कृत्वा, प्रातर्मध्याह्नसायंकालेषु योगायेति[१] मन्त्रेणैव स्नानं कृत्वा, रात्रौ कृष्णस्य देवक्या अंके उपविष्टस्य स्तनं पिबत एकस्मिंस्तने हस्तं स्थापयित्वा मुखं पश्यतः यज्ञायेति[२] षोडशोपचारपूजां कृत्वा, बलभद्रदेवकीवसुदेवनन्द-यशोदासुभद्रारोहिणीनां कृष्णभुक्तशेषेण पूजां कृत्वा, चन्द्रोदयकाले कृष्णाग्रे पात्रं निधाय शंखोदकेन फलपुष्पादिसहितेन जातः कंसेति[३] मन्त्रेण कृष्णायार्घ्यं दत्वा, बहिर्मण्डलं कृत्वा, चन्द्राय क्षीरोदार्णवेति [४] मन्त्रेण अर्घ्यं दत्वा,

मृगिणे सितबिम्बाय सोमदेवाय चेन्दवे ।
रोहिणीसक्तचित्ताय तारकापतये नमः ।।

इति नमस्कारं कृत्वा, अद्य स्थित्वेति [५] मन्त्रेण कृष्णाय व्रतं समर्प्य यथाशक्ति ब्राह्मणपूजां कृत्वा, विश्वायेति मन्त्रेण निद्रां कुर्यात् । ततः परदिने सर्वायेति पारणं कृत्वा धर्मायेति [६] मन्त्रेण स्वस्थो भवेत् ।

---

१. योगाय योगपतये योगिने योगिसम्भवे । योगेश्वराय देवाय गोविन्दाय नमो नमः ।।

२. यज्ञाय यज्ञपतये यज्ञानां सम्भवाय च । यज्ञेश्वराय गोपाय गोविन्दाय नमो नमः ।।

३. जातःकंसवधार्थाय भूभारणोत्तारणाय च । कौरवाणां विनाशाय दैत्यानां निधनाय च ।।
पाण्डवानां हितार्थाय धर्मसंस्थापनाय च । गृहाणार्घं मया दत्तं देवक्या सहितो हरे ।।

४. क्षीरोदार्णवसम्भूत अत्रिगोत्रसमुद्भव । गृहाण आर्घं मया दत्तं रोहिण्या सहितः शशिन् ।।

५. अद्य स्थित्वा निराहारः श्वोभूते परमेश्वर । भोक्ष्यामि पुण्डरीकाक्ष चास्मिन्जन्माष्टमीव्रते ।।

६. धर्माय धर्मपतये धर्माणां सम्भवाय च । धर्मेश्वराय देवाय गोविन्दाय नमो नमः ।।

इतरासु जयन्तीषु विशेषपूजा कार्या ।

सर्वासां तु जयन्तीनां श्रेष्ठा कृष्णाष्टमी मता ।
यस्मात्सन्निहितात्यन्तं तत्रैवोपवसेन्नरः ।।
सर्वास्वपि जयन्तीषु पूजा कार्या विशेषतः।
सान्निध्य एव कर्तव्य उपवासो न दूरगः।।

- इति भारद्वाजसंहितायाम् ।

सन्निहिता । अस्माकं कालेन समीपस्था । द्वापरान्ते कृष्णावतारस्य जातत्वात् रामादेर्व्यवहितत्त्वम् ।

पारणं तु -

रोहिण्यामर्धरात्रे तु यदा कृष्णाष्टमी भवेत् ।
जयन्ती नाम सा प्रोक्ता ... ।।[१]

इति श्रीमदाचार्यैः क्रियान्वयेन अष्टम्याः प्राधान्योक्तेः।

तथा-

तिथिरष्टगुणं[१] हन्ति नक्षत्रं च चतुर्गुणम् ।
तस्मात्सर्वप्रयत्नेन तिथिभान्ते च पारणम् ।।

इति स्मृतौ तिथिमध्ये पारणायां दोषाधिकोक्तेश्च तिथ्यन्ते पारणं अवश्यकम् । रोहिण्यन्तो दिवा चेत् तदन्त एव पारणम् ।

रात्रौ चन्द्रोदये रोहिण्यन्तोऽष्टम्यन्तो[२] दिवा चेत् अष्टम्यन्ते तिथ्यन्ते पारणं न, रोहिण्यन्तप्रतीक्षा कार्या ।

---

१. 'सर्वपापप्रणाशिनी ' इति चतुर्थः पादः । (जयन्तीकल्पे)

१. तिथिरष्टगुणम् । सामान्यादष्टगुणम् । एवं सर्वत्र ।

२. अष्टम्यन्ते अष्टमीतिथिसमाप्तौ पारणं कार्यम् ।

एवमेव माधवेनाप्युक्तम् -

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः ।
ऋक्षान्ते [1] पारणं कुर्याद्विना श्रवणरोहिणीम् ।।

इति रोहिण्याः पर्युदासात् । एवमेव निर्णयामृतेनाप्युक्तम् ।

यत्तु माधवेन 'इदं वचनं केवलनक्षत्रोपवासविषयं' इत्युक्तं तदयुक्तम् । पूर्वार्धे तिथिनक्षत्रसांयोगिकव्रतस्योक्तत्वेन केवलनक्षत्रोपवासप्रसक्त्यभावात् ।

अन्यत्रापि -

तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारणम् [2]।

इति तिथ्यन्तमात्रस्योक्तत्वात् । उत्सवान्तशब्देन द्वितीयदिने स्नानानन्तरं कृष्णपूजानन्तरकालो गृह्यते । न त्वर्धरात्रे कृष्णपूजानन्तरकालः ।

अद्य स्थित्वा निराहारः श्वोभूते परमेश्वर ।
भोक्ष्यामि पुण्डरीकाक्ष चास्मिन् जन्माष्टमीव्रते ।।

इति उपवासस्य संकल्पितत्वात् उत्सवान्ते [3] पारणं त्वशक्यविषयं । तथा 'यामत्रयादुपरि चेत्प्रातरेव हि पारणमि'त्यपि । अष्टम्यन्तः रात्रौ चेद्रात्रावेव पारणम् ।

कृष्णाष्टमीं प्रस्तुत्यानन्तसंहितायामुक्तम् -

भक्तानां वैष्णवानां च शुद्धानां नियतात्मनाम् ।

---

१. ऋक्षान्ते श्रवणनक्षत्रान्ते ।

२. पारणं पारतीरकर्मसमाप्तावित धातोरयं साधितः शब्दः ।

३. उत्सवान्ते - अर्धरात्रौ कृष्णपूजानन्तरकाले ।

विहिता सात्वताभिज्ञै रात्रावेव तु पारणा ।। - इति।
यत्तु ब्रह्मवैवर्तेष्वपि -

सर्वेष्वेवोपवासेषु दिवापारणमिष्यते ।
अन्यथा पुण्यहानिस्स्यादृते धारणपारणम् ।।

इति वचनं पूर्ववचनविरोधात् जन्माष्टमीव्यतिरिक्तविषयम् ।

प्रकृतमनुसरामः।। चैत्रपूर्णमा मन्वादिः।। चैत्रकृष्णद्वितीया विजयध्वजतीर्थस्वामिनां पुण्यतिथिः।। तृतीया वागीशतीर्थस्वामिनां पुण्यतिथिः।। अमावास्यायां तु गुडोदकपूर्णकरको[1]दकुम्भव्यजनादिकं देयम् ।। इति चैत्रमासः।।

## ।। अथ वैशाखमासः।।

तत्र वैशाखशुक्लद्वितीया कूर्मजयन्ती ।। शुक्लतृतीया अक्षयतृतीया । सा पूर्वाह्णव्यापिनी ग्राह्या । 'कृष्णे चैवापराह्णिकी' [2] इति स्मृतेः। दिनद्वयेऽपि तद्व्याप्तौ अव्याप्तौ वा परैव । रोहिणीबुधसोमवारयुता चेद्विशेषतः पुण्यकालः। इयमेव युगादिः। विद्याधिराजतीर्थानां पुण्यतिथिः। परशुरामजयन्ती च ।। षष्ठी तु रामचन्द्रतीर्थानां पुण्यतिथिः ।। शुक्लसप्तम्यां गङ्गोत्पत्तिः [3]।।

---

१. करकः पात्रविशेषः ।
२. अपराह्णिकी तत्कालव्यापिनी ।
३. गंगोत्पत्तिः भगीरथेन चाऽत्रानीता ।

तदुक्तं ब्राह्मे -

वैशाखशुक्लसप्तम्यां जह्नुना जाह्नवी पुरा ।

क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ।

तां तत्र [१] पूजयेद्देवीं गङ्गां गगनमेखलाम् ।। - इति ।

वैशाखशुक्लद्वादश्यां योगविशेषः। सिंहस्थे गुरौ भौमे सति मेषे सूर्ये च सति द्वादश्यां हस्तानक्षत्रे व्यतीपाते च सति पुरुषः गोभूहिरण्य वस्त्रदानेन स पापं त्यक्त्वा ऐहिकामुष्मिकफलविशेषं प्राप्नुयात् ।। त्रयोदश्यां [२] वेदव्यासजयन्ती ।। चतुर्दश्यां श्रीनृसिंहजयन्ती । सा प्रदोषव्यापिनी ग्राह्या । दिनद्वये प्रदोषव्याप्तौ परैव । इयमेव चतुर्दशी शनिवारस्वातीनक्षत्रसिद्धियोगवणिक्करणयुक्ता चेद् विशेष-फलदा ।। वैशाखपौर्णमास्यां तु व्यासपूजा कार्या । उदकुम्भ-दध्योदनतिलपात्रव्यजनछत्रगुडोदकादिदानं कार्यम् । एवमेवाक्षय-तृतीयायां द्वादश्यां च कार्यम् । शक्तौ सत्यां चैत्रपौर्णिमामारभ्य शुक्लदशमीपर्यन्तं कार्यम् ।। इति वैशाखमासः।।

## ।। अथ ज्येष्ठमासः ।।

शुक्लप्रतिपदमारभ्यशुक्लदशमीपर्यन्तं दशाहरनामका [३] दिवसाः ।

---

१. तत्र सप्तम्याम् । इयं मध्याह्नव्यापिनीग्राह्या । दिनद्वये तद्व्याप्तौ पूर्वा ।

२. त्रयोदश्यां इयमपि मध्याह्नव्यापिनी ग्राह्या ।

३. दशहरानामका इति । धर्माब्धौ तु गंगावतार इति उक्तं । परं च सप्तम्यां गंगोत्पत्तिरित्याद्यपि ।

तेषु गङ्गापूजादिकं कार्यम् । तत्र दशम्यां योगविशेषः।

ज्येष्ठमासि सिते पक्षे दशम्यां बुधहस्तयोः ।
गङ्गानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ ।
स्नानदानादिकं कुर्यान्मुच्यते दशपातकैः ।। - इति स्कान्दे।

तत्र शुक्लैकादश्यां निर्जलमुपोष्य द्वादश्यां शर्करान्वितोदकुम्भदाने महाफलम्।। पौर्णमासी तु मन्वादिः। अत्र वटसावित्रीव्रतम् [१]। ज्येष्ठामावास्यायां वा । तद्विधानं निर्णयामृतादौ ज्ञेयम् ।। पौर्णमास्यां तिलदानं अश्श्वमेधतुलफलकम् ।

विशेषयोगस्तु -

सिंहे गुरुः शशी ज्येष्ठे प्राजापत्ये रविस्तथा ।
पूर्णिमा ज्येष्ठमासस्य महाज्येष्ठी प्रकीर्तिता ।।
- इति ज्योतिःशास्त्रोक्तेः।

प्राजापत्यं रोहिणी ।। ज्येष्ठकृष्णतृतीया रघुवर्यतीर्थानां पुण्यतिथिः ।। एकादशी विद्यापतिस्वामिनां पुण्यतिथिः।। इति ज्येष्ठमासः।।

## ।। अथाषाढमासः ।।

अत्र शुक्लदशमी पौर्णमासी च मन्वादिः।। दशम्यां गोमयादिना गृहशुद्धिः। वस्त्राणां प्रक्षालनम् । जीर्णमृन्मयभाण्डविसर्जनं कार्यम् ।।

---

१. अत्र वटसावित्रीति । यदा चतुर्दशी अष्टादशघटिका भवति तदा सावित्रीव्रतमपि परित्याज्यमिति माधवः। इदं व्रतं अमावास्यायामपि । इदं कालमाधवे हेमाद्रौ च स्पष्टं । पूर्णिमायां तु हेमाद्रिणा पुत्रकामव्रतं कथितम् ।

एकादश्यां तु तप्तमुद्राधारणम् । चतुर्वर्णैश्चतुराश्रमैः पुरुषैः स्त्रीभिर्बालैश्च ग्राह्यम् । तत्र श्रुत्यादयः प्रमाणानि ।

ऋक्सामयोः-

चमूषच्छ्येनः शकुनो बिभृत्वा गोविन्दुद्रप्स आयुधानि बिभ्रत्।
अपामूर्मिं सचमानः समुद्रं तुरीयं धामं महिषो विवक्ति ।।

अस्या ऋचोऽर्थः -

यः अपां कर्मणां आपः अप इति वैदिकनिघण्टौ कर्मनामसु पाठात् । ऊर्मिं तरङ्गरूपं समुद्रं संसारसमुद्रं सचमानः प्राप्तः 'षच समवाय' इति धातोः। समवायः सम्बन्धः। अत एव श्येनः शकुनः श्येननामकपक्षिविशेष इव । चमूषत् चम्वां स्त्रीपुत्रादिरूपसेनायां सीदति श्रान्तो भवतीति तथोक्तः। 'षद्लृ विशरण गत्यवसाद-नेष्वि'ति धातोः कर्तरि क्विप् । गोविन्दुः गोभिर्वेदैर्विद्यते विज्ञायते च विचार्यत इति वा ।

तथोक्तः। 'विद् ज्ञाने विद्लृ लाभे विद विचारणे' इत्येभ्यः 'कर्मणि विन्दुरिच्छु'रिति सूत्रेण उप्रत्ययो निपातितो नुमागमश्च कर्तरि उप्रत्ययपक्षे तु गोशब्देन द्वितीयान्तेन समासः। गोविन्द-शब्दात् 'सुपां सुलुगि'ति षष्ठ्याः स्वादेशः। गोविन्दुः गोविन्दो-र्नारायणस्य आयुधानि 'जात्याख्यायाम्' इति जातौ बहुवचनम् । आयुधत्वजात्युपेतं चक्रं शंखं च बिभृत्वा विशेषेण सुदर्शन-होमोपेताग्निना भृत्वा धारकः 'डुभृञ्' धारणपोषणयो'रित्यतः अन्येभ्योऽपि दृश्यन्त इति क्वनिपि ह्रस्वस्य पितिकृतितुगिति तुक्। शङ्खचक्रे सुदर्शनहोमसंस्कृताग्निना सन्तप्येति यावत् ।

बिभ्रत् धारयेत् । स्वभुजयोरिति शेषः [१]। 'डुभृञ् धारणपोषण-योरि'त्यतः 'लेटि तिपि इतश्च लोप' इति इकारलोपे 'लेटोऽ-डाटौ' इत्यडागमे 'शपः श्लौ द्वित्वादौ भृञामि'दित्यभ्यासस्येत्वे यणादेशः, 'अभ्यस्तानामादिरि'त्याद्युदात्तत्वं 'छांदसस्तिङ् तिङ' इति निघाताभावः।

स पुरुषः द्रप्सः द्रं कुत्सितं प्सः भक्षकः पापनाशकः सन् इति यावत् । 'द्रा कुत्सायामि'त्यतः कर्मण्यौणादिको डप्रत्ययः। 'प्सा भक्षण' इत्यत 'आतोऽनुपसर्गे क' इति कप्रत्ययः। महिषः पूज्यः 'मह पूजायामि'ति धातोः 'महेष्टिषजिति' कर्मणि टिषच् प्रत्ययः। कर्तरि तु गोविन्दस्य पूजक इत्यर्थः। गोविन्दस्य तुरीयं चतुर्थं वासुदेवरूपं विश्वादिषु तुरीयनामकं वा धाम गृहरूपं विवक्ति प्राप्नोति । 'वंचेर्बहुलं छन्दसी'ति शपः श्लौ द्वित्वे बहुलं छन्दसीत्यभ्यासस्येत्वं च धातूनां अनेकार्थत्वात्प्राप्त्यर्थत्वम् । अथवा आयुधानि चक्रशंखगदापद्मनारायणमुद्राख्यानि बिभृत्वा विशेषेण गोपीचन्दनादिना संस्कारकः सन् बिभृयात् । अन्यत्समानं। अत्र लेटः 'लिङ्गऽर्थे लेडि'ति लिङऽर्थे विधानात् लिङश्च विध्यर्थ-कत्वात् तप्तमुद्रा धारणस्य प्रत्यहं गोपीचन्दनादिना श्रीमुद्राधारणस्य

---

१. शेष इति । अपि च -

'ओं प्रते विष्णो अब्जचक्रे सुतप्ते जन्मांभोधितनंवे चर्पणीन्द्राः।
मूले बाह्वोर्दधन्या पुराणानि विष्णोर्लिङ्गानि आयुधानि बिभ्रत् ।।'

इत्यादयः श्रुतयः प्रमाणानि । तथा च पद्मपुराणादौ गर्गादिसंहितादौ स्मृत्यादौ स्पष्टमि-त्येवालम् ।

च विधिः सिद्धः। मोक्षाख्यफलकथनात् ।

अत्र तात्पर्यं च सिद्धं गोविन्दुरित्यस्य षष्ठ्यर्थत्वं विहाय प्रथमार्थत्वाङ्गीकारे चमृषदित्यस्य विशेषणस्य विष्णौ बाधः। बिभृत्वेत्यस्य वै बिभ्रदित्यनेन पुनरुक्तता । विष्णोर्नित्यमुक्तत्वेन तुरीयधामप्राप्तेरपि सदातनत्वेन तदुक्तवैयर्थ्यं स्यात् ।

तथा आथर्वणश्रुतिः -

चक्रं बिभर्ति वपुषाभितप्तं बलं देवानाममृतस्य विष्णोः।
स एति लोकं दुरिता विधूय विशन्ति यद्यतयो वीतरागाः।।

अस्यार्थः-

पुरुषः देवानां बलं बलप्रदं अमृतस्य विष्णोश्चक्रं सुदर्शनं अभितप्तं संस्कृताग्निना सन्तप्तं वपुषा शरीरावयवभूतभुजेन बिभर्ति बिभृयात् । पूर्वश्रुतिसमाख्यानात्। अयमपि लेट्। 'सर्वे विधयश्छ-न्दसि विकल्प्यन्त' इति वचनात् । अडाटोरिकारलोपस्य चाभावः। शंखस्याप्युपलक्षमेतत्। स पुरुषः दुरितानि पापानि विधूय त्यक्त्वा वीतरागा वैराग्यशीलाः यतयः यत् यं लोकं विशन्ति प्रविशन्ति तं विष्णोर्लोकमेति प्राप्नोतीति । चक्रशब्दस्य सनाद्यर्थकत्वं अभितप्त-मित्युक्तेः वपुषा बिभर्तीत्युक्तेश्च बाधितम् ।

आथर्वणश्रुत्यन्तरं च -

'चक्रमादायाग्नौ [1] ताप्य ब्राह्मणस्य दक्षिणे बाहौ धारयेत् । उपविशति पाञ्चजन्यमादायाग्नौ ताप्य ब्राह्मणस्योत्तरे बाहौ धारयेत्।

---

१. चक्रं आदाय ताप्य छान्दसत्वादसमासेऽपि ल्यप् । ब्राह्मणस्य बाहो धार्यमिति ।

ब्रह्मवादिनो वदन्ति देवासो येन विधृतेन बाहुना सुदर्शनेन प्रयाताः स्वर्गमापतुर्येनांकिता लोके सृष्टिं वितन्वन्ति ब्राह्मणास्तद्वहन्ती'ति । षष्ठ्यर्थे द्वितीया वा । इति भगवद्रूपापेक्षया षष्ठी ।

तथा शतपथब्राह्मणेषु 'अथ कात्यायनेति होवाचे'त्यादि नवखण्डेषु तप्तचक्रं द्विभुजे धार्यमित्यादीनि सन्ति ।

तथा वसिष्ठस्मृतिः -

शंखचक्रं स्फुटं कुर्यात्प्रतप्तं [१] बाहुमूलयोः।
सर्वाश्रमेषु वसतां स्त्रीणां च श्रुतिचोदनात् ।।
होमाग्निनैव सन्तप्तं चक्रमादाय वैष्णवः ।
दक्षिणं बाहुमूलं तु दग्ध्वा कर्म समाचरेत् ।।
स पुत्रपशुदाराणां ब्राह्मणानां विशेषतः ।
कुर्यादचेतनानां च वैष्णवानां च लक्ष्म च ।। - इति।

शाण्डिल्यस्मृतिरपि -

पशुपुत्रादिकं सर्वं गृहोपकरणानि च ।
अंकयेच्छंखचक्राभ्यां नाम कुर्याच्च वैष्णवम् ।।
मुद्रयेदासनादीनि शयनानि महीतले ।। - इति ।

शंखोऽपि -

उपवीतादिवद्धार्याः शंखचक्रगदादयः।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः।। - इति ।

विस्तरस्तु स्मृतिकौस्तुभे बोध्यः।

---

१ सतप्तमांत वा पाठ ।

द्वादशोर्ध्वपुण्ड्राणि तु गोपीचन्दनेन धार्याणीत्युक्तम् ।
वासुदेवोपनिषदि -

ब्राह्मणानां तु सर्वेषां वैदिकानामनुत्तमम् ।
विधीयते तूर्ध्वपुण्ड्रं गोपीचन्दनमृत्तिका ।। - इति ।

पाद्मे -

श्रीरङ्गे द्वारकायां च श्रीकूर्मे च तथा स्थितम् ।
सिंहाद्रौ च प्रयागे च वाराहे तुलसीवने ।।
गृहीत्वा मृत्तिकां भक्त्या शालग्रामजलैः सह ।
तयोर्ध्वपुण्ड्रं धृत्वाङ्गे विष्णुसायुज्यमाप्नुयात् ।। - इति ।

एताभिर्मृत्तिकादिभिर्मुद्राधारणमुक्तमाग्नेये -

चक्रशंखगदादीनि बिभृयाद् ब्राह्मणोत्तमः ।
पंचायुधानि विष्णोस्तु ज्ञानमुक्तिप्रदानि वै ।। - इति ।

अत्रावान्तरविशेषोऽस्मत्पितृचरणकृतस्मृतिसङ्ग्रहे बोध्यः ।।

आह्निकप्रकरणे । पृथिवीचन्द्रोदयस्तु -

यस्तु सन्तप्तशंखारिसंचिह्नितततनुर्नरः ।
स सर्वयातनाभोगी चंडालो जन्मकोटिषु ।। (१)
द्विजन्मा तप्तशंखारिलिंगांकिततनुर्नरः ।
संभाष्य रौरवं याति यावदिन्द्राश्चतुर्दश ।। (२)
- इति बृहन्नारदीयोक्तेः ।
शंखचक्राद्यंकनं च गीतनृत्यादिकं तथा ।
एकजातेरयं धर्मो न जातु स्याद् द्विजन्मनः ।। (३)

शंखचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ।। (४)
- इति वैष्णवाश्वलायनवचनात् ।

शंखचक्रादिधारणं तु शूद्रादिविषयमित्याहुः। तत्तु विष्णुद्वेषमूलत्वात् अशुद्धम् । बृहन्नारदीयविष्णुपुराणाश्वलायनस्मृत्यादौ बहुपुस्तकेषु एषां वचनानां अभावात् । क्वचित्तत्सत्वेऽपि बह्वृचादिश्रुतिहारीतादिस्मृतिकूर्मवराहवायुपुराणादिविरुद्धत्वेन औदुम्बरीसर्वावेष्टनस्मृतिवदेषां वचनानामप्रामाण्यात् । श्रुत्यादीनां तप्तमुद्राधारणविषये च निरवकाशत्वेन अर्थान्तराभावस्यान्तरानुपपत्योपपादितत्वात् । एषां वचनानां बौद्धादिदैत्यमतानुवादकत्वेन सावकाशत्वात् ।

अनुवादस्य च दूषणार्थत्वेऽपि दूषणानां स्पष्टत्वेनानुक्तेः। तथाहि । येषु वचनेषु तप्तमुद्राधारणस्य केनचित्प्रसक्तस्य दूषणं वाच्यम्। अप्रसक्तस्य निषेधायोगात् । अग्निदाहेन दुःखजनके तप्तमुद्राधारणे रागासम्भवेन गोपीचन्दनस्य दूरदेशस्थस्य शरीरायासद्रव्यव्ययसाध्यत्वेन विभूतिवदसुलभत्वात् । तेन मुद्राधारणेऽपि रागासम्भवेन रागदतः प्राप्त्यभावात् । प्रत्यक्षानुमानविषयत्वेन ताभ्यामपि प्राप्त्यभावात् । श्रुत्यादिना प्रसक्तिर्वक्तव्या । तथा च श्रुत्यादेः स्वभावत उपजीव्यत्वं । ततश्च प्राबल्यात् । तदुक्ततप्तमुद्राधारणस्य पुराणादिवचनेन पौरुषेयेण उपजीवकेन दूषयितुं अशक्यत्वात् । येषां वचनानां वेदोऽप्रमाणमिति बुद्धवाक्यवत् असुरजनमोहनार्थत्वसंभवाच्च ।

अत एवोत्तरवाक्ये तप्तमुद्राधारणसाम्येन नृत्यगानयोः ग्रहणम् ।
नहि नृत्यगानादिकं विष्णुभक्तानां निषिद्धम् ।
भागवतादौ -

नाहं वसामि वैकुण्ठे योगिनां हृदये तथा ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ।।

- इति ।

एवं व्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चकैः।
हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः।।
इति नृत्यगानयोः सर्वविष्णुभक्तलक्षणत्वेनोक्तेः।

ये कण्ठलग्नतुलसीनलिनाक्षमाला
ये बाहुमूलयुगले धृतशंखचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्राः
ते वैष्णवा भुवनमाशु पवित्रयन्ति ।।

- इति वायुपुराणे ।

विष्णुपुराणेऽपि -

भुजयुगमपि चिह्नैरंकितं यस्य विष्णोः
परमपुरुषनाम्नां कीर्तनं यस्य वाचि ।
ऋजुतरमपि पुण्ड्रं मस्तके यस्य कण्ठे
सरसिजमणिमाला यस्य तस्यास्मि वश्यः ।।

एवं स्थिते येषां वचनानां प्रामाण्यमित्याग्रहे तु अर्थान्तरं

वाच्यम्। अत्र पूर्वश्लोकस्थ [1] पूर्वार्धस्य स येन पूर्यत इति विशेषेणान्वयः। द्वितीयश्लोके पूर्वार्धेन पूजयेदिति विशेषेणान्वयः। तृतीय- श्लोकेतु एकजातेः एका मुख्या जातिर्ब्राह्मणत्वादिर्यस्य तस्य शंख- चक्रादिधारणं धर्मः स्यान्नान्यस्य द्विजन्मनः द्वाभ्यां जातस्य अन्यस्य पत्न्यां अन्यस्मात् जातस्येत्यर्थः। इत्यावृत्त्या योज्यम् । चतुर्थश्लोके तु यथोक्तविधिना नेति शेषेणान्वयः ।

अथवा पूर्वश्लोकद्वये तनुशब्दस्य ग्रहणात्सर्वतनौ तप्तमुद्राधारणे दोष उक्तः। भुजद्वये धारणमित्यर्थः। उत्तरश्लोकद्वये विध्यनुसारेणैव शंखचक्रादिधारणं कार्यमित्येवं ज्ञापयितुं विध्यतिक्रमे दोष उक्तः। नहि प्रमाणानां निन्दने तात्पर्यम् । नहि निन्दा निन्दितुं प्रवर्तते । अपि तु विधेयं स्तोतुम् । इति पूर्वमीमांसान्यायात् । येष्वपि श्लोकेषु यथायोग्यं विधिकल्पनात् । अत एव पूर्वोक्तिप्रमाणेषु भुजद्वयग्रहणं संगच्छते । मृदा मुद्रादिधारणस्य द्वादशपुण्ड्रेषु संख्याविशेषेण च विधिः स्मृतिकौस्तुभादौ उक्तो ज्ञेयः । एवमेवान्यानि मुद्राधारणदूषणवाक्यानि योज्यानि ।।

आषाढशुक्लैकादश्यां देवस्य महापूजां कृत्वा चातुर्मास्यव्रतसंकल्पः कार्यः । तदुक्तं भविष्ये -

महापूजां ततः कुर्याद्देवदेवस्य चक्रिणः ।
जातीकुसुममालाभिर्मन्त्रेणानेन पूजयेत् ।।
सुप्ते त्वयि जगन्नाथ जगत्सुप्तं भवेदिदम् ।

---

१. ६५ तमे पृष्ठे पृथ्वीचन्द्रोदयेन उदाहृतश्लोकेषु प्रथमः श्लोकः ।

विबुद्धे च विबुद्ध्येत प्रसन्नो मे भवाच्युत ।।
चतुरो वार्षिकान् मासान् देवदेव जगत्पते ।
निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव ।।
गृहीतेऽस्मिन्व्रते देव पंचत्वं यदि मे भवेत् ।
तदा भवेत्सुसंपूर्णं प्रसादात्ते जनार्दन ।। - इति ।

प्रथमे मासि दशविधशाकवर्जनम् ।

## ।। दशविधशाकानि ।।

तदुक्तं स्कान्दे -

मूलपत्रकरीराग्रफलकाण्डाधिरूढकाः [१] ।
त्वक्पुष्पं कवचं चेति शाकं दशविधं स्मृतम् ।।
- इति ।

अधिरूढकाः अंकुराः। अत्र शक्यते येन अन्नादिकं भोक्तुं इति विग्रहेण रूढ्या च अन्नादिभोजनसाधनपत्रफलशाकादेः विवक्षितत्वात् । पूगीफल[२]ताम्बूलपत्रादेर्निषेधाभावः। आर्द्रकादेः लवणशाकत्वेन अन्नभोजनसाधनत्वेऽपि तत्कार्यशुण्ठिमरीचिकादीनां शाकत्वेन प्रसिद्ध्यभावान्न निषेधः। एवं नारिकेलखर्जूरफलादिषु यत्रान्नसाधनत्वाभावः शाकत्वेन प्रसिद्ध्यभावो वा तेषां शाकव्रते भक्षणनिषेधो नास्तीति ज्ञेयम् ।

---

१. मूलं मूलकादि । पत्रं तण्डुलजादि। पुष्पं त्रपुपपुष्पादि ।

२. पूगीफलमिति । शाककरणरूढ्यभावात् ।

अत्र चतुर्मासेषु विशेषनियमाः कार्याः ।

तथा च देवलः -

ब्रह्मचर्यं तथा शौचं सत्यमामिषवर्जनम् ।
व्रतेष्वेतेषु चत्वारि वरिष्ठानीति निश्चयम् ।।     - इति ।

## ।। आमिषानि तु ।।

प्राण्यंगचूर्णं [१] चर्माम्बु [२] जम्बीरं बीजपूरकम् [३] ।
अयज्ञशिष्टं [४] माषादि यद्विष्णोर्न निवेदितम् ।
दग्धमन्नं मसूरं च आमिषं परिकीर्तितम् ।।

प्राण्यंगचूर्णं शंखशुक्तिकादिजन्यं चूर्णम्। तेन पाषाणादिजन्यस्य न निषेधः। चर्माम्बु चर्मपात्रगतोदकम् । तेन चर्मपात्रगततैलघृतादेः न निषेधः। जम्बीरं एतन्नामकं निम्बूफलव्यतिरिक्तमेव । आम्लरसोपेतं फलं । बीजपूरकं मातुलुंगफलं । 'जम्बीरको दन्तशठ' इति । 'बीजपूरो मातुलुंग' इति च । राजनिघण्टौ जम्बीरस्य केवलस्य आमिषतुल्यत्वेऽपि तक्रादिसंयोगेन आमिषत्वम् । यथा केवलस्य लवणस्य जिह्वेन्द्रियसंबन्धे 'प्रत्यक्षलवणं चैव गोमांसाशनवत्स्मृतं' इति स्मृतेः। गोमांसतुल्यत्वेऽपि शाकादिसंबन्धेन न दोषः।

---

१. प्राण्यङ्गचूर्णमिति शुक्तिजादि । सुधा इ० ।

२. चर्माम्बु चर्मणोद्घाटितं तत्र स्थितं वा ।

३. बीजपूरकं मातुलुंगं । 'फलपूरो बीजपूर' इत्याद्यमरः ।

४. अयज्ञशिष्टं वैश्वदेवादिरहितं । अत्र यज्ञः देवपित्रादियज्ञः इति उक्तं पुरतः ।

तथा -

जम्बीरस्य रसोपेतं लसल्लवणमिश्रितं ।

तक्रं देयं ब्राह्मणाय .. ।।

इति पुराणे विधानात् तक्रसंबन्धे न दोषः। अयज्ञशिष्टं । यज्ञः देवपितृयज्ञः । देवयज्ञः समाराधनादिरूपः। पितृयज्ञः श्राद्धादिः। तत्र शिष्टं विहितं तद्व्यतिरिक्तं रागादिना प्राप्तमित्यर्थः। माषादि माषान्नं । आदिशब्देन मधु । 'मधुमाषविवर्जितमि'त्यादौ माष-निषेधेन सह मधुनिषेधस्याप्युक्तेः।

द्वौ गावौ यत्र दुह्येते माता कन्या पयस्विनी ।

तद्धृतं मधु[1] संज्ञेयं मधु नो माक्षिकं मधु ।।

गोच्छागीमहिषीदुग्धादन्यद्दुग्धादि चामिषम् । [2]

द्विजक्रीता[3] रसाः सर्वे लवणं भूमिजं तथा ।।

ताम्रपात्रस्थितं गव्यं[4] जलं पल्वलसंस्थिम्[5] ।

आत्मार्थं पाचितं चान्नमामिषं तत्स्मृतं बुधैः।।

- इति विष्णुधर्मोत्तरे।

चतुर्ष्वपि हि मासेषु हविष्याणि न दोषकृत् । - इति ।

---

१. यत्र माता पयस्विनी कन्या च द्वौ गावौ दुह्येते, तद्धृतं पयः 'मधु' संज्ञेयं । माक्षिकं मधु अत्र मधुशब्देन न विवक्षितम् ।

२. गोच्छागीमहिषीदुग्धादित्येकं पदं । छागी अजा ।

३. द्विजक्रीताः द्विजात्क्रीता द्विजेन क्रीताः इति वा द्विजात् विनिमयत्वेन गृहीताः।

४. गव्यं तस्य विकार इत्यधिकारस्थेन गोपयसोर्यदित्यनेन यत्। तेन न केवलं पयः।

५. 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः। विशन्ति अत्र भेकादयः इति । अल्पसरः।

**हविष्याणि च भविष्य उक्तानि -**

हैमन्तिकं [१] सिता स्विन्नं धान्यं मुद्रा यवास्तिलाः।
कंदं सैन्धवसामुद्रे गव्ये [२] च दधिसर्पिषी ।।
पयोऽनुद्धृतसारं च पनसाम्रहरीतकी [३] ।
नीवाराः [४] षष्टिकाश्चैव नागरं गजतिन्तिणी ।।
कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्याणि प्रचक्षते ।।

- इति ।

अन्येऽपि नियमाः। तैलभोजनपरान्नत्यागरूपाः महाफलप्रदाः। अनिषिद्धभोजनवस्तुमध्ये [५] आमरणान्तं कस्यचिद्भोजनवर्जनं कार्यम् । तदसम्भवे वा चातुर्मास्ये माघे वैशाखे च ।।

पौर्णमास्यां सन्न्यासिनां चातुर्मास्यसंकल्पः। सा त्रिमुहूर्तव्यापिनी ग्राह्या।। आषाढकृष्णपंचमी जयतीर्थस्वामिनां पुण्यतिथिः।।

---

१. हैमन्तिकमिति । एतदभिप्रायेणैव धर्माब्धौ व्रीहियवमुद्गतिलकंगुकलायश्यामकधान्यानि, रक्तभिन्नमूलकं सूरणादिकन्दः, सैन्धवं सामुद्रलवणं, गव्यानि दधिसर्पिदुग्धानि, पनसाम्रनालिकेरफलानि, हारीतकीपिप्पलीजीरकशुण्ठीचिन्चाकदलीलवलीधात्रीफलानि, गुडेतरेक्षुविकाराः - इत्येतानि अतैलपक्वानि ।

२. तत्र गव्यं तक्रं माहिषं क्वचिदित्युक्तम् ।

३. हरीतकी । 'अस्त्री शाकं हरितकं' इत्यमरः ।

४. नीवीराः तृणधान्यानि ।

५. 'मूलकास्तु येभ्यो दुर्गन्धिस्ते सर्वे त्याज्या' इति विधानपारिजाते। तेन मूलकजात्यवच्छिन्नाः सर्वे त्याज्याः ।

अत्र कर्कसंक्रान्त्यनन्तरं मासपर्यन्तं केशकृन्तनं निषिद्धम् ।

कुम्भे कर्काटके चापि कन्यायां कार्मुके रवौ ।

रोमखण्डो गृहस्थस्य पितृन्नाशयते यमः ।।

इति याज्ञवल्क्यः। कार्मुके धनुर्मासे । स्मृत्यन्तरेऽपि -

धनुःकुम्भौ त्रिधा कृत्वा पूर्वभागद्वयं त्यजेत् ।

अर्धं कर्कटके चैव कन्यां सर्वां परित्यजेत् ।। - इति।

## ।। अथ नदीनां रजोदोषः।।

सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः।

तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः[१]।। - इत्युक्तेः।

वसिष्ठः -

उपाकर्मणि चोत्सर्गे प्रातःस्नाने तथैव च ।

वापीकूपाद्यभावेऽपि तथा तत्तीरवासिनाम् ।।

महापदि प्रवासे च ग्रहणे चन्द्रसूर्ययोः ।

तत्र स्नानं प्रकुर्वीत रजोदोषो न विद्यते ।।

अत्र नदीग्रहणेन शोणसिन्ध्वादिनदानां रजोदोषो नास्तीत्युक्तं भवति । नूतनकूपादौ तु । योगयाज्ञवल्क्यः -

अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका ।

भूमेर्नवोदकं चैव दशरात्रेण शुद्ध्यति ।। - इति।

।। इत्याषाढमासः।।

१. समुद्रगाः। समुद्रं गच्छन्ति ताः।एतदन्या अन्याभिर्नदीभिर्गच्छन्त्यः सरः प्राप्ताः वा।

## ।। अथ श्रावणमासः ।।

श्रावणमासे शुक्लचतुर्थ्यां बालकानामनन्तपूजा । तस्यां बालकानां त्रयोदशग्रन्थियुक्तं अनन्तदोरं कृत्वा दूर्वांकुरादिभिः संपूज्य दक्षिणहस्ते बध्नीयात् ।। इयमेव वराहजयन्ती[1] ।। तदनन्तरं शुक्लपंचम्यां नागपूजा कार्या । सा तु परविद्धा त्रिमुहूर्तव्यापिनी ग्राह्या ।। श्रावणशुक्लैकादश्यां देवपूजानन्तरं शाकव्रतं देवाय समर्प्य दध्यभोजनव्रतं[2] देवस्याग्रे संकल्पयेत्। तस्मिन्मासेऽपि दध्यभोजनेऽपि तक्रभोजनस्य न निषेधः। तत्कार्यत्वेऽपि ततो भिन्नत्वात् । गुणभेदाद् व्यवहारभेदाच्च । एवं दुग्धव्रतेऽपि बोध्यम् । अन्यथा घृतादीनामपि त्यागापत्तेः ।।

अथ शुक्लद्वादश्यां विष्णोः पवित्रसमर्पणम् । पंचम्यां पौर्णमास्यां वा। पवित्रलक्षणं तु। सुवर्णरजतताम्रसूत्रैः पट्टदुकूलकार्पाससूत्रैर्वा पवित्रं कार्यं। तत्रोत्तमपवित्रं षष्ट्यधिकशतत्रयसूत्रैः प्रतिमायाः जानुपर्यन्तं मालाकारेण कृत्वा शतग्रन्थियुक्तं कार्यम् । सप्तत्यधिकशतद्वयसूत्रैः मालाकारं नाभिपर्यन्तं कृत्वा पंचाशद्ग्रन्थियुक्तं कार्यम् । अधमं तु अशीत्यधिकशतसूत्रैः षट् त्रिंशद् ग्रन्थियुक्तं कार्यम् ।

प्रकारान्तरं च -

षट् त्रिंशच्च चतुर्विंशत् द्वादशेति च केचन ।

---

१. वराहजयन्तीति । इयं मध्याह्नव्यापिनी ग्राह्या ।

२. उक्तं च - 'दधि भाद्रपदे मासे वर्जयेच्च सदा हरे' -इति ।

चतुर्विंशद्द्वादशाष्टावित्येके मुनयो विदुः ।
साधारणपवित्राणि त्रिभिः सूत्रैः समाचरेत् ।।

- इति ।

एवं पवित्राणि कृत्वा सम्यक्प्रक्षाल्य 'अतो देवा' इत्यनेन 'पवित्रं ते' इत्यनेन मन्त्रेण देवस्य समर्प्य ब्राह्मणेभ्यो दत्वा स्वयं धारयेत् । इदं नित्यं [१]।

न करोति विधानेन पवित्रारोपणं तु यः ।
तस्य सांवत्सरी [२] पूजा निष्फला मुनिसत्तम ।।

- इति विष्णुरहस्योक्तेः।

## ।। अथोपाकर्म ।।

ऋग्वेदिभिः श्रावणे मासे श्रवणनक्षत्रे उपाकर्म कार्यम् । श्रवणं तु उत्तराषाढासम्बन्धरहितं उदये मुहूर्तमात्रं ग्राह्यम् ।

उदयव्यापिनीत्वे च विष्णवर्क्षं घटिकाद्वयम् ।
उपाकर्म प्रकुर्वीत तस्य पुण्यमनन्तकम् ।।

- इति गार्ग्योक्तेः।

पूर्वदिने उत्तराषाढयोगे परदिने श्रवणाभावे घटिकाद्वयन्यूने वा भाद्रपदशुक्लपंचम्यां हस्तयुक्तायां वा कार्यम् । एवं श्रवणदिने ग्रहणे संक्रान्त्यादावपि ।

---

१. नित्यम् । सन्ध्यादिवदवश्यकर्तव्यताकम् ।
२. सांवत्सरी । सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणित्यण् टिड्ढात ङीप् ।

अत्र विशेषो वृद्धमनुनोक्तः -

अर्धरात्रादधस्ताच्चेत्संक्रान्तिग्रहणं तदा ।
उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत् ।। - इति।
नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके।
कर्कटे संस्थिते भानौ उपाकुर्यात्तु दक्षिणे ।।

इति बृहस्पतिवचनाद्दक्षिणे देशे कर्कटे सूर्ये स्थितेऽपि नोपाकर्म-निषेधः। तैत्तिरीयकास्तूपाकर्म कुर्युः श्रावणपौर्णमास्यां ग्रहण-संक्रान्तिरहितायां संगवव्यापिन्याम् । सामगाः श्रवणे हस्ते शुक्ल-पञ्चम्यां वा उपाकर्म कुर्युः।

श्रवणे मासि अवृष्ट्या सस्यानुत्पत्तौ भाद्रपदश्रवणनक्षत्रे कार्यं। तत्रापि सस्यानुत्पत्तौ शुक्रास्तादावपि वार्षिकत्वात्कार्यमेव। इदं पर्वणि ग्रहणेऽपि चतुर्दश्यां श्रवणे वार्षिकत्वात् कार्यम् ।

प्रथमारम्भस्तु गुरुशुक्रयोः अस्तत्वे बाल्ये वृद्धत्वे च मलमासे च न भवति ।

गुरुर्भार्गवयोर्मौढ्ये बाल्ये वा वार्धिके मले ।
प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत् ।।
- इति गार्ग्योक्तेः।

गुरुशुक्रयोरस्तमयात्पूर्वं वृद्धत्वम् । उदयानन्तरं बाल्यत्वम् । तत्र शुक्रः पश्चादस्तमाने पंचदिनानि सप्तदिनानि वा वृद्धत्वम् । उदये तु त्रिदिनं पंचदिनं वा । एवं गुरोरपि । शुक्रगुर्वस्तग्रहणसंक्रा-न्त्यादिप्राप्तौ तु भाद्रपदमासि श्रवणे बह्वृचः पूर्णमायां तु यजुः-शाखिनः । हस्ते पंचम्यां वा सामगाः उपाकर्म कुर्युः । तत्रापि

शुक्रास्तादिप्राप्तौ आषाढमासे श्रावणे पौर्णमास्यां हस्ते पंचम्यां वा कुर्युः। तथा च बोधायनः - 'श्रावण्यां पौर्णमास्यामाषाढ्यां च उपाकृत्य छन्दांस्यधीयीत' इति । अत्र श्रावणी आषाढीग्रहणं तत्तन्मासस्य श्रवणहस्तपंचम्युपलक्षणार्थम् ।

अत्र सामान्यतो विधानं तु आषाढ्यामित्येतदपि भाद्रपदेऽपि प्रतिबन्धके सति ऋग्वेदादिसर्वशाखिविषयं ज्ञेयम् । कालान्तर उपाकर्माविधानात् । उपाकर्मणश्च प्रथमवर्षे अवश्यं कर्तव्यत्वात् । एवं -

श्रावण्यां प्रोष्ठपद्यां वा उपाकृत्य यथाविधि ।
उक्तछन्दांस्यधीयीत ... ।।

इति मनुवाक्येऽपि श्रावणमासे संक्रान्त्यादिदोषयुक्ते सति प्रोष्ठपद्यां भाद्रपदपूर्णिमायां तत्रस्थश्रवणहस्तपंचमीषु ऋग्वेदादिशाखिभिः उपाकर्म कार्यमित्यर्थो बोध्यः।

पर्वण्यौदयिके कुर्युः श्रावणे तैत्तिरीयकाः।
बह्वृचाः श्रवणे कुर्युर्हस्तर्क्षे सामवेदिनः।।

इति गोभिलवचने श्रावणे मासि औदयिके पर्वणि पौर्णमायां तैत्तिरीयकाः यजुर्वेदिन उपाकर्म कुर्युः । श्रावणे मासि श्रवणे ऋग्वेदिनः । हस्ते नक्षत्रे सामवेदिनः कुर्युः । इति विशेषवचनात् भाद्रपदाषाढमासयोरपि ऋग्वेदिनां श्रवणनक्षत्रं सामवेदिनां हस्तनक्षत्रमिति ग्राह्यम् ।। इत्युपाकर्म ।।

## ।। अथोत्सर्गः ।।

बह्वृचैर्माघ्यां कार्यः । तैत्तिरीयैरुत्सर्जनं तु पौष्यां पौर्णमास्यां रोहिण्यां वा कार्यम् । काण्वादिभिस्तु भाद्रपदेषु पुष्यनक्षत्रे वा कार्यः। सर्वैरुपाकर्मदिने वा कार्यम् ।

'पुष्ये चोत्सर्जनं कुर्यादुपाकर्मदिनेऽपि [१] च' -इति स्मृतेः। इदमपि उपाकर्मवत्प्रथमतो ग्रहणसंक्रान्त्यादौ मलमासे च न कार्यं। उपाकर्मोत्सर्जने मलमासानंतरं शुद्धमासे कार्ये ।।

श्रावणी पूर्णिमा हयग्रीवजयन्ती ।। कृष्णपक्षाष्टमी कृष्णाष्टमी । सा पूर्वमेव निर्णीता [२]।।

अत्र सिंहस्थेऽर्के गोप्रसूतिरनिष्टदा ।

सिंहराशिगते सूर्ये गोप्रसूतिर्यदा भवेत् ।
पौषे च महिषी सूते दिवा चाश्वतरी तथा ।।
माघे बुधे च महिषी श्रावणे वडवा दिवा ।
तदाऽनिष्टं भवेत्किंचित्तच्छान्तौ किंचिदाचरेत् ।।
प्रसूतान्ते क्षणादेव तां गां विप्राय दापयेत् ।
ततो होमं प्रकुर्वीत घृताक्तै राजसर्षपैः ।।
आहुतीनां घृताक्तानां अयुतं जुहुयात्ततः ।
सोपवासः प्रयत्नेन दद्याद्विप्राय दक्षिणाम् ।। - इति ।

व्याहृतिभिश्चायं होमः ।।

---

१. उपाकर्मदिन इत्येकं पदं । कुर्यादित्यस्य उत्सर्जनं कर्म ।

२. पूर्वमेव निर्णीता । एकादशीनिर्णयानन्तरं चैत्रमासनिर्णये ।

श्रावणामावास्यायां कुशग्रहणम् -

मासे नभस्यमावास्यां तस्यां दर्भोच्चयो मतः।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः।।
- इति हारीतोक्तेः।

नभसि श्रावणे। 'नभखेः श्रावणो मासः' इत्यभिधानात् । अयातयामाः[१] पर्युषितत्वदोषरहिताः । पुनःपुनः विनियोज्याः । स्नानतर्पणादौ गृहीताः एव पुनःपुनः द्वितीयस्नानतर्पणादावपि ग्राह्याः । तेषां शेषत्वदोषो नास्तीति भावः । पिंडे विनियुक्तानां तु अन्यकर्मणि न ग्राह्यत्वं स्मृत्यन्तरादवगन्तव्यम् । यथा शवदाहे विनियुक्ताग्रेः यथा वा एकादशाहे भोक्तुर्ब्राह्मणस्याग्राह्यत्वं तथैव अवगन्तव्यम् ।

श्रावण्यां श्रवणे चैव पूर्वं हयशिरा हरिः ।
जगाद सामवेदं तु सर्वकिल्बिषनाशनम् ।।
सिन्धुर्नदीपतिः स्वीयं प्रतिष्ठा तत्र चैव हि ।
अतोऽर्थे श्रवणे चैव स्नानं सर्वार्थसिद्धिदम् ।।
हुत्वा संपूजयेद्विष्णुं शार्ङ्गचक्रगदाधरम् ।
श्रोतव्यानि तु सामानि पूज्या विप्राश्च सर्वदा ।।
क्रीडितव्यं च भोक्तव्यं तत्रैव स्वजनैः सह ।
जलक्रीडा तु कर्तव्या नारीभिर्भर्तृभिः सह ।।

।। इति श्रावणमासः।।

---

१. याताः यामा यस्मिन् तथा न सन्ति ते अयातयामाः ।

।। अथ भाद्रपदमासः ।।

अत्र शुक्लतृतीया मन्वादिः। अस्यां मुहूर्तमात्रव्यापिन्यां हरितालिकागौरीव्रतम् ।। शुक्लचतुर्थ्यां मध्याह्नव्यापिन्यां सिद्धिगणेशव्रतम् । परदिन एवांशेन साकल्येन वा मध्याह्नव्याप्त्यभावे सर्वपक्षेषु पूर्वा ग्राह्या ।

चतुर्थी [१] गणनाथस्य मातृविद्धा [२] प्रशस्यते ।
मध्याह्नव्यापिनी चेत्स्यात्परतश्चेत्परेऽहनि ।।

- इति बृहस्पत्युक्तेः।

इयं रविभौमवारयोश्चेद्विशेषफलदा । अत्र चन्द्रदर्शनं निषिद्धम् । मिथ्याभिशापप्राप्तेः। दैवाच्चेत् चन्द्रदर्शने मिथ्याभिशापपरिहारस्तु विष्णुपुराणे -

सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ।
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ।।

इति जाम्बवत्या स्वभ्रातरं प्रति वचनस्य स्मरणम् ।।

भाद्रपदशुक्लपंचमी ऋषिपंचमी । इयं मध्याह्नव्यापिनी ग्राह्या । दिनद्वये तथात्वे परा । दिनद्वये तथात्वे तद्व्याप्तौ अव्याप्तौ वा परैव । तत्र सप्तर्षिपूजादिकं तत्कल्पोक्तं ज्ञेयम् ।।

शुक्लषष्ठ्यां तु -

शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनम् ।

---

१ चतुर्थीति । अस्यां स्यमन्तकोपाख्यानपठने चन्द्रदर्शनदोषो गच्छति ।

२ मातृविद्धा तृतीयातिथिविद्धा ।

प्राशनं पंचगव्यस्य अश्वमेधफलाधिकम् ।।
योऽस्यां पश्यति गाङ्गेयं दक्षिणापथवासिनम् ।
ब्रह्महत्यादिपापैस्तु मुच्यते नात्र संशय: ।।[१]

इति भविष्ये । गाङ्गेय: कार्तिकेय: ।।

भाद्रपदशुक्लाष्टमी[२] कृष्णाष्टमी । सा पूर्वविद्धा ।। नवमी दुर्गानवमी । इयं ज्येष्ठापूजिते ज्येष्ठायोगवशे पूर्वा परा वा ग्राह्या । दिनद्वययोगे परा । प्रतिवार्षिकं ज्येष्ठाव्रतं अष्टम्यामेव कार्यम् । परन्तु दाक्षिणात्यास्तु[३] ऋक्ष[४] एव कुर्वन्ति । अत्र भानुवाराष्टमी-ज्येष्ठायोगोऽतिप्रशस्त इति भाव: ।।

शुक्लैकादशी परिवर्तनैकादशी । अस्यां देवपूजानन्तरं दधि-व्रतं परिसमाप्य दुग्धव्रतसंकल्पं कुर्यात् । अस्मिन्मासि दुग्धकार्यं पायसामिक्षमंठादि[५] भोजनं च न कार्यम् । क्षीररसानुवृत्ते:। दुग्ध-

---

१. भाद्रपदशुक्लषष्ठी । अस्यां बलभद्रजन्मोत्सव: ।
तथाचोक्तम् -

अथ व्रजे पंचदिनेषु भाद्रे स्वाती च षष्ठ्यां च सिते बुधे च ।

इत्यारभ्य पुरत: -

बभूव देवो वसुदेवपत्न्यां विभासयन्नन्दगृहं स्वभासा ।। - इति ।

२. भाद्रशुक्लाष्टमी कृष्णाष्टमी । कृष्णोत्साहाष्टमी । अस्यां राधाजन्म । अतस्तस्यां कृष्णसहितराधाया: पूजनं कार्यम् । इदं गर्गसंहितादौ स्पष्टं इति भाति । इयं दूर्वाष्टमी इत्यन्यत्र ।

३. दाक्षिणात्या: 'दक्षिणापश्चात्पुरस्त्यक्' ।

४. ऋक्षे ज्येष्ठानक्षत्रे । अस्यां ज्येष्ठादेवीपूजनम् ।

५. मंठादि इति । 'मिश्रसृष्टा दधिका मवरस्याग्र मण्डमस्त्रियां' इत्यमर: ।

प्रत्यभिज्ञायाश्च सत्वात्। दधितक्रघृतानां तु न निषेधः। तेषु दुग्धरसाननुवृत्तेः । दुग्धकार्यकारित्वाभावाच्च । उष्णदुग्धे दधिस्थापनेन यज्जातं सा आमिक्षा [१]।

सन्धिन्यनिर्दशावत्सगोपयः परिवर्जयेत् ।

इति वचनं दुग्धव्रतातिरिक्तकालेऽपि निषेधार्थं। सन्धिनी गर्भिणी । अनिर्दशा प्रसवानन्तरं अनिर्गतदशरात्रा । अवत्सा मृतवत्सा ।।

द्वादश्यां विष्णुपरिवर्तनोत्सवं कुर्यात् । प्रातः विष्णुं संपूज्य प्रार्थयेत् । तत्र मन्त्रः -

नमस्कृत्वा [२] जगन्नाथं पर्यंके शायिनं मुदा ।
अवघुट्य [३] शनैर्गत्वा पूजयेदुपचारकैः ।।
प्रणम्य भक्त्या तत्पादौ [४] गृह्योपनिषदः स्तुवन् ।
मन्त्रमेवं पठन् देवं स्थापयेदुत्तरामुखम् ।।
देवदेव जगन्नाथ कल्पानां परिवर्तक ।
परिवृत्तमिदं सर्वं येन स्थावरजंगमम् [५] ।।
यदिच्छा चेष्टितैरेव जाग्रत्स्वप्नसुषुप्तिभिः ।

---

१. आमिक्षेति । 'आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः' इत्यमरः। शृतं पक्वं च तदुष्णं च तस्मिन् क्षीरे दधियोगतो या विकृतिः सा आमिक्षा ।

२. नमस्कृत्वेति । पर्यंकशायिनं जगन्नाथं सर्वोत्तमं विष्णुं नमस्कृत्वा । शनैर्गत्वा ।

३. अवघुट्य प्रविवृत्य । घुट् परिवर्तने । उपचारकैः पूजयेत् ।

४. तत्पादौ भक्त्या प्रणम्य । तस्य विष्णोः । प्रणम्य नमस्कृत्य। एवं मन्त्रं पठन् देवं- उत्तरामुखं स्थापयेत् ।

५. येन त्वया इदं सर्वं स्थावरजंगमं जगत् परिवृतं स त्वं कल्पानां परिवर्तक । देवाधिदेव जगन्नाथ परिवर्तस्व इति सुगमम् ।

जगद्धिताय सुप्तोऽसि पार्श्वेन परिवर्तय ।।
परिवर्तनकालोऽयं जगतः पालनाय ते ।
तवाज्ञयाऽयं शक्रोऽपि ध्वजे तिष्ठेत्समुत्सुकः ।।
दृष्ट्वा त्वत्पादकमलं विमुंचन्मूर्धभिर्जलम् ।
महीतलं प्लावयति प्रजापालनहेतुकम् ।।
इति संप्रार्थ्य देवेति विनयात्तोषयेत्ततः ।
वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव ।।
पार्श्वेन परिवर्तस्व सुखं स्वपिहि माधव ।।

अत्र एकादश्यां द्वादशीश्रवणयोगः विष्णुशृङ्खलयोगः ।
द्वादशी श्रवणं स्पृष्ट्वा स्पृशेदेकादशीं यदि ।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः ।। -इति नारदीये।
अन्येऽपि विशेषाः -
बुधश्रवणसंयुक्ता [१] सैव चेद्द्वादशी यदि ।
अत्यन्तमहती सा स्याद्दत्तं भवति चाक्षयम् ।। -इति स्कान्दे।

---

१. बुधश्रवणसंयुक्तेति । बुधः तन्नामकवासरः श्रवणं तदभिधं नक्षत्रं तयोर्युक्ता ।
तथाचोक्तं विष्णुधर्मोत्तरे भार्गवकृष्णसंवादे । राम उवाच -
उपवासासमर्थानां किं स्यादेकमुपोषितम् ।
इति प्रश्ने कृष्ण उवाच -.
या रामश्रवणोपेता द्वादशी महती तु सा ।।
तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम् ।
प्राप्नोत्ययत्नात् धर्मज्ञो द्वादशद्वादशीव्रतम् ।।
इति केवलं श्रवणद्वादशीमहात्म्यं वर्णयित्वा बुधयोगं वर्णयति -

इयं तु उत्तराषाढमिश्रा न ग्राह्या । इयं द्वादशी वामनजयन्ती ।। तदुक्तं अष्टमस्कन्धे भागवते -

श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः। - इति। हरिर्वामनरूपेण अवतीर्ण इति शेषः। श्रोणायां श्रवणनक्षत्रे चन्द्रे सति अभिजिति मध्याह्नस्य घटिकाद्वये श्रावणद्वादश्यां मेषादि-सौरमासानां चैत्रादिसंज्ञाविवक्षायां सौरमासस्य श्रावणत्वात् तस्य शुक्लद्वादश्यां वामनावतारः। तेन चान्द्रभाद्रपदस्य शुक्लद्वादश्यां श्रवणनक्षत्रे वामनावतार इति पुराणोक्तविरोधाभाव उक्तो भवति । वामनावतारकाले सिंहराशौ सूर्यस्य अवस्थानात् ।।

भाद्रपदशुक्लचतुर्दशी अनन्तचतुर्दशी। सा त्रिमुहूर्तव्यापिनी [१] मुहूर्तव्यापिनी वा ग्राह्या । दिनद्वयेऽप्युदयव्यापिन्यां पूर्वा ग्राह्या ।

---

श्रवणद्वादशीयोगे बुधवारो भवेद्यदि ।
अत्यन्तं महती नाम द्वादशी सा प्रकीर्तिता ।।
स्नानं जप्यं तथा दानं होमं श्राद्धं सुरार्चनम् ।
सर्वमक्षयमाप्नोति तस्यां भृगुकुलोद्वह ।। - इत्यादि ।

तथा च ब्रह्मवैवर्ते । भविष्यत्पुराणे ।

श्रवणद्वादशी उपवासविषयेऽप्यत्रैव विष्णुरहस्ये -

द्वादश्यामुपवासीत त्रयोदश्यां तु पारणम् ।
निषिद्धमपि कर्तव्यमित्याज्ञा पारमेश्वरी ।।
बुधश्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् ।
अतीव महती तस्यां सर्वं कृतमिहाक्षयम् ।।

स्पष्टं चैतद्धेमाद्रिप्रणीतचतुर्वर्गचिन्तामणौ व्रतखण्डे ।

१. त्रिमुहूर्तव्यापिनीत्यादि । मुहूर्तं घटिकाद्वयम् ।

मध्याह्ने पूजाकालस्य सत्वात् । उदयव्याप्त्यभावे त्रयोदशीयुता ग्राह्या ।

अथ भाद्रपदपौर्णमास्यां प्रपितामहादिपूर्वांस्त्रीन्पितृन् उद्दिश्य पक्षश्राद्धकर्त्रा श्राद्धं कार्यम् ।

तदुक्तं ब्राह्मे -

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यां तु कर्तव्यं वाराहवचनं तथा ।।

एषां नान्दीमुखत्वं तत्रैव -

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः ।
तेभ्यः पूर्वतरा ये च ते तु नान्दीमुखाः स्मृताः ।।

-इति ।

अत्र मातामहा अपि ग्राह्याः -

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ।।

- इत्युक्तेः ।

एतेषां सपिण्डकं श्राद्धं कार्यम् -

पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम् ।
वर्जयित्वा प्रोष्ठपदीं यथा दर्शस्तथैव च ।।

- इति गार्ग्योक्तेः ।

एतत्पौर्णमासीश्राद्धं सर्वैरपि कार्यम् । पक्षश्राद्धकर्त्रैव कार्यमिति विशेषज्ञापकाभावात् ।।

**।। अथापरः पक्षः ।।**

आषाढीपौर्णमासीमारभ्य पंचमः पक्षोऽपरः पक्षः। कन्यासंक्रान्तियुक्तश्चेत्पुण्यतमः। तत्र श्राद्धमावश्यकम् ।

तत्र पक्षपंचकम् -

भाद्रपदकृष्णप्रतिपदमारभ्य आश्वयुजशुक्लप्रतिपत्पर्यन्तं षोडशदिनेषु श्राद्धमिति एकःपक्षः। भाद्रपदपूर्णिमामारभ्य अमावास्यापर्यन्तमित्यपरः। पंचमीमारभ्य वा अमावास्यापर्यन्तमित्यन्यः। अष्टमीमारभ्य दशमीमारभ्य वा अमावास्यापर्यन्तमिति चतुर्थपंचमपक्षौ । तिथिवृद्धौ तु प्रतिपदमारभ्य अमावास्यापर्यन्तमिति षष्ठोऽपि । एकस्मिन्नपि वा दिने सर्वपित्रुद्देशेन श्राद्धमावश्यकम् । अकरणे प्रत्यवायात् । अन्येषु पक्षेषु फलभूयस्त्वं नत्वकरणे प्रत्यवायः।

विधवायास्तु स्वभर्त्रादित्रय-पित्रादित्रय-मातामहादित्रयाणां स्वसृमातामह्याश्च श्राद्धं कृत्वा पिण्डदानं कार्यम् ।

उक्तं तु सङ्ग्रहे -

चत्वारि पार्वणानीह विधयायाः सदैव हि ।
स्वसृभर्तृश्वशुरादीनां मातापित्रोस्तथैव च ।
ततो मातामहानां च श्राद्धदानमुपक्रमेत् ।।

इतोऽपि शक्तौ सत्यां -

श्वश्रूणां च विशेषेण मातामह्यास्तथैव च ।

इति षट्पार्वणानि भवन्ति ।

अत्यशक्तौ तु -

स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च ।
विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ।।

इति वचनं तु प्रतिसांवत्सरिकविषयम् । यथाकालमित्युक्तेः। भर्तृपित्रादीनां स्वस्वश्राद्धदिनकाल इत्यर्थः। इदं तु पुत्राभावे ज्ञेयम् ।

सकृन्महालयश्राद्धे तु प्रतिपत्षष्टीसप्तम्येकादशीत्रयोदशीचतुर्दश्यः। मंगलादित्यभृगुवाराः। कृत्तिका रोहिणी `मघा रेवती स्वजन्मनक्षत्रं स्वजन्मनक्षत्रात्पूर्वोत्तरनक्षत्रे चेत्येतानि वर्ज्यानि । अस्मिन् पक्षे भरणीव्यतीपाताष्टमीद्वादश्यमावास्यादिनेषु वारादिनिषेधो नास्ति । तत्रापि पितृश्राद्धदिने सकृन्महालयश्राद्धे तु बहुफलम् । तित्थादिनिषेधश्च नास्ति । एवं पक्षश्राद्धेऽपि ।
तथा च कार्ष्णाजिनिः -

नभस्यस्यापरे पक्षे श्राद्धं कार्यं दिने दिने ।
नैव नन्दादि वर्ज्यं स्यान्नैव निन्द्या चतुर्दशी ।। - इति।

पंचम्यादिश्राद्धपक्षे तु -

प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।
- इति याज्ञवल्क्योक्तेः।

चतुर्दश्यां न श्राद्धं । पौर्णिमास्याः पितृतिथित्वे तु भरण्यष्टम्यादिष्वेकदिने श्राद्धं । तत्र त्रयोदशीचतुर्दश्योः श्राद्धदिनत्वेऽपि तयोः पिंडदाननिषेधादत्र भरणीदिने भरणीप्रयुक्तमप्यपिण्डकं श्राद्धं कार्यम् ।

यत्तु -

विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ।।

इति निषेधवचनं तु महालयादिव्यतिरिक्तविषयम् ।

महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि ।
कृतोद्वाहोऽपि कुर्वीत पिंडनिर्वापणं सदा ।।

- इत्युक्तेः।

सन्न्यासिपुत्रैर्द्वादश्यामपरपक्षश्राद्धं कार्यं । भरण्यादौ वा ।। अपरपक्षमध्ये श्राद्धासम्भवे तु कन्यासंक्रान्तिमध्ये एकस्मिन् दिने कार्यम् । दीपावल्यां अमावास्यायां वा। वृश्चिकसंक्रान्तिपर्यन्तं वा। ततः पितरः शापं दत्वा गच्छन्ति ।

वृश्चिकपर्यन्तं श्राद्धासंभवे तु मन्त्रः -

'दुरो अश्वस्य दुर इन्द्र गोरसिदुरो यवस्य वसु न इनस्पतिः शिक्षानरः प्रदिवो अकामकर्शनः सखासखिभ्यस्तमिदं गृणीमिसि।' इति मन्त्रस्य दशवारं जपः कार्यः। तेन महालयपूर्तिः ।।

अत्र तिलतर्पणं तु -

तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तु तिलैः सह ।।

- इति स्मृतेः।

अथात्र महालये देवताः -

ताताम्बात्रितयं सपत्नजननी मातामहादित्रयं
सस्त्रि स्त्री तनयादि तातजननीस्वभ्रातरः सस्त्रियः ।

ताताम्बात्मभगिन्यपत्यधवयुग्जायापिता सद्गुरुः

शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ।।

अस्यार्थः। पित्रादित्रयम् । मात्रादित्रयम् । यस्त्वनेकमातृकः तस्य विशेषमाह गालवः -

अनेका मातरो यस्य श्राद्धे वाऽपरपक्षके ।

अर्घ्यदानं पृथक्कुर्यात्पिंडमेकं नु निर्वपेत् ।।

- इति ।

जीवन्मातृकस्तु सापत्नमातुरेकोद्दिष्टं कुर्यात् । नतु पितामह्यादीनां । अन्वष्टक्यादौ सापत्नमात्रादित्रयस्याऽपि जीवत्पितृकेण अर्घ्यपिंडादिकं कार्यम् ।

अन्वष्टक्यं च यन्मातुर्गयाश्राद्धं महालयम् ।

पितृपत्नीषु यच्छ्राद्धं कार्यं पार्वणवद्भवेत् ।।

- इति वृद्धमनूक्तेः।

सस्त्रीति मातामह्यादित्रयं पृथग्देवताः। स्त्री आत्मपत्नी । तनयादि पुत्रः पुत्री च। तातजननीस्वभ्रातरः। तातभ्राता पितृव्यः। जननीभ्राता मातुलः। स्वभ्राता च एते त्रयः सस्त्रियः सपत्नीका देवताः। ताताम्बात्मभगिनी । तातभगिनी पितृष्वसा । अम्बाभगिनी मातृष्वसा । आत्मभगिनी स्वभगिना । एतत् त्रितयं । अपत्यधवयुक् पुत्रपतिसहितं देवताः। जायापिता श्वशुरः। श्वश्रूशालकयोरप्युपलक्षणम् । सद्गुरुः वेदसच्छास्त्रोपदेष्टा । पितृव्यादिषु पितृव्याः सपत्नीकाः सपुत्रकाश्चेति । पितृष्वस्रादिषु । सभर्तृकायै सपुत्रकायै

इत्यादिप्रयोगो द्रष्टव्यः। पितृव्यादीनां जीवनत्वेन तत्त्रियादीनां न पिंडदानादि । द्वारलोपात् । अत्र तन्त्रेण पार्वणैकोद्दिष्टानां श्राद्धं । धूरिलोचनौ विश्वेदेवौ ।

महालयादेः श्राद्धं सन्न्यस्तपतितजीवत्पितृकेणापि पिंडार्घ्यरहितं संकल्पश्राद्धं कार्यम् ।

वृद्धौ तीर्थे च सन्न्यस्ते ताते च पतिते सति ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः।।

- इति कात्यायनोक्तेः।

मुंडनं पिंडदानं च प्रेतकर्म च सर्वशः ।
न जीवत्पितृकः कुर्याद्गुर्विणी पतिरेव च ।।

- इति पिंडनिषेधात् ।

स्वमातृमातामहादीनां गयान्वष्टकाश्राद्धानि विशेषवचनात् सपिंडकानि कार्याणि । अपरपक्षश्राद्धं मलमासे न कार्यम् ।

अस्मिन्पक्षे [१] षष्ठी मंगलवारे रोहिणीनक्षत्रव्यतीपातयुता चेत् कपिलसंज्ञा । हस्ते सूर्यश्चेद्विशेषफलप्रदा । अत्र स्नानोपवासजपहोमकपिलगोदानसूर्यान्तर्गतविष्णुपूजादिकं महाफलप्रदम् । अत्र विशेषः। स्कान्दे -

देवदारुं तथा सीरं कुंकुमैलामनः शिलाम् ।

---

१. अस्मिन्पक्षे षष्ठीति । तथा स्कान्दे -

प्रोष्ठपदा सिते पक्षे षष्ठी भौमेन संयुता ।
व्यतीपातेन रोहिण्या सा षष्ठी कपिला स्मृता '।।

प्रोष्ठपदो भाद्रपदः स चात्र दर्शान्तो ग्राह्यः । रोहिणीयोगस्य तत्रैव सम्भवात् ।

पत्रकं पद्मकं षष्टी मधुगव्येन भूषयेत्[१]।।
क्षीरेणालोढ्य गव्येन[२] स्नानं कुर्यात्समन्त्रकम् ।
आपस्त्वमसि देवेश ज्योतिषां पतिरेव च ।।
पापं नाशय मे देव वाङ्मनःकायकर्मजम् ।
पंचगव्यकृतस्नानः पल्लवैश्चैव[३] मार्जयेत् ।।

- इति[४]।

अत्र सुवर्णस्य सूर्यान्तर्गतलक्ष्मीनारायणप्रतिमां कृत्वा संपूज्य ब्राह्मणाय दद्यात्। अयं योगः चन्द्रोदये यदा स्यात्तदेयं चन्द्रषष्ठी[५]। तत्र दिनद्वये चन्द्रोदये चेत् पूर्वेव ग्राह्या । तदा अत्रैव व्रतादिकं ज्ञेयम् । अत्र सप्तम्यादित्रयं तिस्राष्टकम् । मध्याष्टमी गयातुल्या ।।

## ।। अथ नवम्यामन्वष्टकश्राद्धम् ।।

अन्वष्टकासु नवभिः पिंडैः श्राद्धमुदाहृतम् ।
पित्रादिमातृमध्यं च ततो मातामहान्तिकम् ।।

- इति कात्यायनोक्तेः।

---

१. 'पत्रकं पद्मकं षष्टी मधुगव्येन भूषयेत्' इत्यत्र 'पत्रकं पद्मकं षष्टी मधुगव्येन प्रेषयेत्' इति पाठः। (चतुर्वर्गचिन्तामणौ व्रतखण्डे)

२. गव्येन इत्यत्र कल्केनेत्युक्तं तत्रैव । अत्यत्रपाठे गव्येनेति क्षीरविशेषणम् । कल्केनेति पाठे, गव्येन आलोड्य संमर्द्य तेन कल्केन स्नानं कुर्यात् ।

३. 'पल्लवोऽस्त्री किसलयः' इत्यमरः । पञ्चपल्लवैः इत्यपि पाठान्तरः ।

४. एतत्कपिलाषष्ठीव्रतं स्कान्दे ।

५. चन्द्रषष्ठीति । अस्या विचारस्तु तत्रैव हेमाद्रौ ।

इदमन्वष्टकश्राद्धं जीवत्पितृकेणापि सर्वमातृणां कार्यम् ।

सर्वासामपि मातृणां श्राद्धं कन्यागते रवौ ।

नवम्यां हि प्रदातव्यं ब्रह्मलब्धवरा यतः ।।

इति सुतेनावश्यकर्तव्योक्तेः। जीवत्पितृकेण[१] अन्वष्टकांतराकरणेऽपि इदं कार्यम् ।

अत्र सर्वासामित्युक्तेः स्वमातरि जीवत्यामपि अन्यासां सपत्निमातृणां कार्यम् । स्वमातरि मृतौ तत्सहितानां । अत्र सर्वासां नामनिर्देशेन एको ब्राह्मणोऽर्घ्यः पिंडश्च । नामैक्ये तु द्विवचनादि प्रयोगः। ततः पितामहिप्रपितामह्योः अर्घ्यादिपिंडादि । विश्वेदेवस्थाने अन्यो ब्राह्मणः ।

एतत्तु भर्तृमरणे न कार्यम् -

श्राद्धे नवम्यां कुर्यात्तु मृते भर्तरि लुप्यते ।

इति स्मृतेः। शिष्टाचाराच्च । यत्तु कमलाकरेण 'इदं वचनं निर्मूलत्वादप्रमाणमि'त्युक्तं तदयुक्तं । शिष्टाचारविरोधात् । इयं अविधवा नवमीत्युच्यते ।।

अत्र त्रयोदशी युगादिः। अस्यां ससन्तानेन अपिंडकं श्राद्धं कार्यम्। एतच्च नित्यम् । बहुफलप्रदा त्रयोदशी ।

त्रयोदशी भाद्रपदी कृष्णा मुख्या पितृप्रिया ।

तृप्यन्ति पितरस्तस्यां स्वयं पंचशतं समाः ।।

---

१.जीवत्पितृकेणेति । एतेन मृतपितृकेण न कार्यं । कुर्वतामाधारो विचिंतनीयः।

मघायुतायां तु तस्यां जलार्घैरपि तोषिताः ।
तृप्यन्ति पितरस्तत्र वर्षाणामयुतायुतम् ।।
श्राद्धमस्यामकुर्वाणो नरकं प्रतिपद्यते ।।

- इति विष्णुधर्मे।

अत्र सूर्ये हस्तस्थिते इयमेव गजच्छाया ।

सूर्ये हस्तस्थिते या तु मघायुक्ता त्रयोदशी ।
तिथिर्वैवस्वती नाम स्याच्छाया कुंजरस्य तु ।।
मधुमाषैश्च शाकैश्च पयसा पायसेन च ।
श्राद्धं भाद्रे त्रयोदश्यां मघासु च विशेषतः।।

- इति वसिष्ठः।

इदं मघात्रयोदशीश्राद्धं अविभक्तैरपि पृथक्कार्यं ।

विभक्ता वाऽविभक्ता वा कुर्युः श्राद्धं पृथक् सुताः।
मघासु च ततोऽन्यत्र नाधिकारः पृथग्विना ।।

- इति स्मृतेः।

इदं मलमासेऽपि कार्यम्। इदं तु षड्दैवत्यं श्राद्धम् । पक्षश्राद्धकर्त्रा तु तन्त्रेण कार्यं न तु पृथक् । न वा प्रसंगतः सिद्धिः।।

।। अथ चतुर्दशी ।।

अस्यां विषशस्त्रजलाग्निसर्पविद्युद्दंष्ट्रिशृङ्गत्यादिभिः हतानां सवैश्वदेवं एकोद्दिष्टविधानेन एकपिंडकं श्राद्धं कार्यम् ।

प्रेतपक्षे चतुर्दश्यामेकोद्दिष्टविधानतः ।
दैवयुक्तं तु तच्छ्राद्धं पितृणामक्षयं भवेत् ।।

अमावास्यायां विशेषः -

सूर्ये हस्तस्थिते अमावास्यायां हस्तनक्षत्रं चेत्सा गजच्छाया । तथामावास्यायां मध्याह्नानन्तरं यदा छाया किंचित्पूर्वस्यां दिशि गच्छति साऽपि गजच्छाया । तस्मिन् काले श्राद्धादिकं मुख्यम् ।

हंसे करस्थिते या तु अमावास्या करान्विता ।
सा ज्ञेया कुंजरच्छाया इति बोधायनोऽब्रवीत् ।।
वनस्पतिगते सोमे या छाया प्राङ्मुखी भवेत् ।
गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत् ।।

- इति स्मृतेः।

हंसः सूर्यः करो हस्तः। प्राङ्मुखी पूर्वमुखी ।।
इति भाद्रपदमासः।।

।। अथाश्वयुजमासः।।

आश्विनशुक्लप्रतिपदि दौहित्रस्य मातामहश्राद्धमुक्तम् ।

जातमात्रेऽपि दौहित्रे विद्यमानेऽपि मातुले ।
कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सति ।।

- इति।

प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणम् ।
श्राद्धं मातामहं कुर्यात्सपिता संगवे सदा ।।

- इति स्मृतेः।

इदं श्राद्धं जीवत्पितृककर्तृत्वादपिण्डकं [१] कार्यम् ।

मुंडनं पिंडदानं च प्रेतकर्म च सर्वशः।

न जीवत्पितृकः कुर्याद्गर्भिणी पतिरेव च ।।

इति निषेधात् । अन्वष्टक्यवद्विशेषवचनाभावाच्च ।।

**अत्रैव नवरात्रारम्भः।।** अमायुक्तप्रतिपदि कलशस्थापनं न कार्यम् । मुहूर्तमात्रे प्रतिपदि द्वितीयायुक्तायामेव कलशस्थापनं कार्यं । पूर्वदिने यदि शुध्दा प्रतिपत् द्वितीयादिने वर्धते तदा तु पूर्वदिन एवारम्भः। यदाऽपि परदिने सर्वथा प्रतिपन्नास्ति तदा अमायुक्तपूर्वदिने व्रतारम्भः । अत्रैवोपवासादिकं कार्यम् ।

तिथिवृद्धौ [२] तिथिह्रासे नवरात्रमपार्थकम् ।

अष्टरात्रे न दोषोऽयं नवरात्रतिथिक्षये ।।

इति वचनात् नवरात्रशब्दो लक्षणया क्वचिन्नवदिनक्रियमाणकर्मवाचकः। क्वचिन्मुख्यार्थः।

प्रतिपदि चित्रा वैधृतिश्चेत्तदन्ते कलश- स्थापनम्। संपूर्णा चेद्वैधृतिचित्राचतुर्थांशे कलशस्थापनम् । अभिजिन्मुहूर्ते वा । वैधृत्याद्यभावे प्रातर्दशघटिकामध्ये कलशस्थापनं मुख्यम् ।

---

१. जीवत्पितृकत्वादिति। धर्माब्धौ तु सपिण्डकमपिण्डकं वेत्युक्तम् । अत्राजीवत्पितृकस्याधिकाराभावात् सपिण्डकमित्यस्य जीवत्पितृकस्यैव सम्भवात् अमातुलस्यैवेति केचित् ।।

२. नवानां रात्रीणां समूहो नवरात्रमित्युक्ते क्षये नवसु रात्रिषु उत्सवः कार्यो वेति प्रश्ने आह तिथिवृद्धाविति ।

रात्रौ तु कार्यमेव नवरात्रमध्ये मूलनक्षत्रे पुस्तकपूजा । तत्र सच्छास्त्रपुस्तकेषु सरस्वतीभारत्यौ अभिमानित्वेन ध्यात्वा, पुस्तकेषु तेजोमयीं प्रतिमां ध्यात्वा, मुख्यप्राणं ध्यात्वा, तत्र श्रीवेदव्यासं हयग्रीवं दत्तात्रेयं परशुरामं महिदासमैतरेयं च तत्तन्मन्त्रैरावाह्य, 'गृहा वै प्रतिष्ठासूक्तमि'ति प्रतिष्ठाप्य, प्रत्यहं त्रिकालं शालग्रामादिभिः षोडशोपचारैः पूजयेत् । एवं पुष्पमहानैवेद्यादिभिः संपूज्य श्रवणादिभागे [१] उत्तिष्ठब्रह्मणस्पते इति विसर्जयेत् ।

मूलेनावाहयेद्देवीं श्रवणादौ विसर्जयेत् ।।

- इत्युक्तेः।

एवमाश्वयुजे मासि नवम्यां सितपक्षके ।
ग्रन्थानेकत्र संस्थाप्य वस्त्रैराच्छाद्य सर्वशः ।।
व्यासं परशुरामं च पूजयेत्तत्र भक्तितः ।
बदरिं जैमिनिं चैव सुमन्तं वैशम्पायनम् ।।
आश्मरथ्यं च पैलं च काशकृत्स्नं च लोमशम् ।
परीताल्लोकपालेभ्यो यजेद्व्यासस्य शिष्यकान् ।।

- इति ।

आश्वयुजशुक्लनवमी मूलादिनक्षत्रत्रयुता उदये मुहूर्तत्रयाष्टमीयुता चेन्महानवमी । इयमेव नवमी पूर्वाह्णव्यापिनी मन्वादिः।।

अथ पारणा । प्रतिपदादिनवरात्रोपवासे सप्तम्यादित्रिरात्रो-

---

१. श्रवणादिभागे इत्यनेन पुरतः श्रवणादौ इत्यस्यार्थं द्योतयति। सिद्धान्तकामुद्यां तु नक्षत्रे च लुपीत्यस्योदाहरणे श्रवणेन विसर्जयेदित्युक्तं । 'श्रवणे चन्द्रे गते' इत्युक्ते आद्यार्थे आयास्यत्येव ।

**पवासे वा दशम्यां पारणम् । तिथिक्षयादावष्टोपवासेष्वपि दशम्यां पारणम् । तिथिवृद्ध्यादौ नवोपवासेषु तदा नवम्यां पारणम् । व्रतमध्ये सूतकादिप्राप्तावपि दशम्यां पारणम् । ब्राह्मणभोजनादिकं सूतकान्ते कार्यम् । एवं स्त्रियो रजोदर्शनेऽपि ज्ञेयम् ।**

**इयं दशमी विजयादशमी [१]।। द्वितीयदिने श्रवणयोगाभावे पूर्वा । द्वितीयदिने उदयकाले श्रवणयुता दशमी चेत्परैव ।**

---

१. दशमी विजयदशमीति । दिनद्वये उदयकाल इति निर्णयसिन्धौ ।

तथा च हेमाद्रौ उत्तरखण्डे कश्यपः -

उदये दशमी किंचित्सम्पूर्णैकादशी यदि ।
श्रवणर्क्षं यदा काले सा तिथिर्विजयाभिधा ।।
श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः ।
उल्लंघयेयुः सीमान्तं तद्दिनर्क्षे ततो नराः ।।

इति अन्येषु सर्वेषु पक्षेषु नवमीयुक्ता ग्राह्या । तदुक्तं पुराणसमुच्चये -

या पूर्णा नवमीयुक्ता तस्यां पूज्यापराजिताम् ।
क्षेमार्थं विजयार्थं च प्रसिद्धविधिना नरैः ।।
नवमी शेषसंयुक्तदशम्यामपराजिता ।
ददाति विजयं देवी पूजिता जयवर्धिनी ।।

तथा चान्यत्र -

आश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नरः ।
एकादश्यां न कुर्वीत पूजनं चापराजितम् ।।

तथाच स्कान्दे (हेमाद्रिकृत चतुर्वर्गचिन्तामणौ व्रतखण्डे) -

दशमीं यः समुल्लंघ्य प्रस्थानं कुरुते नृपः ।
तस्य संवत्सरं राज्ये न क्वापि विजयो भवेत् ।। - इत्यादि ।

विजयादशम्यामपराह्णकाले शमीपूजा कार्या । तस्याः पूजाकालत्वात् । दिनद्वये प्रदोषव्यापित्वे परा । अपराह्णव्याप्तेराधिक्यात् । दिनद्वये अपराह्णस्पर्शे पूर्वा । प्रदोषव्याप्तेः सत्वात् । श्रवणयोगस्तु विशेषज्ञापकः।

दशम्यां तु नरैः सम्यक् पूजनीया पराहता ।
ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः ।
उल्लंघयेयुः सीमानं तद्दिनर्क्षे ततो निरा ।।

- इति स्कान्दे।

ईषत्सन्ध्याव्यतिक्रान्तः किंचिदुद्रिक्ततारकः।
विजयो नाम कालोऽयं सर्वकार्यार्थसिद्धिदः।।
उदये दशमी किंचित्संपूर्णैकादशी यदि।
श्रवणर्क्षे यदा काले सा तिथिर्विजयाभिधा ।। - इति ।

पूजाप्रकारस्तु [१] भविष्योत्तरे -

शमीयुक्तं जगन्नाथं भक्तानामभयंकरम् ।
अर्चयित्वा शमीवृक्षमर्चयेच्च ततः पुनः ।। - इति ।

---

१. पूजाप्रकारस्त्विति। आथर्वणगोपथब्राह्मणे -

अथापराजितदशम्यां पूर्वोक्तं विजयमुहूर्त उक्तमित्याद्याश्वयुजदशमीमाहात्म्यमुक्त्वा, 'राजा निर्गत्य भवनात्पुरोहितपुरोगम' इत्यादिप्रस्थानं प्रख्याय, नगरसीमान्तं वास्तुपूजादिक्पालपूजेत्यादिपूजाः कथयित्वा ।

मन्त्रैर्वैदिकपौराणैः पूजयेच्च शमीतरुम् ।
अमंगलानां शमनी शमनी दुष्कृतस्य च ।।

इत्यादि शमीपूजा विहिता । अतश्च शत्रुप्रतिकृतीत्याद्युक्तमित्यलम् ।

मन्त्रस्तु गोपथब्राह्मणे -

अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च ।
दुःस्वप्ननाशनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ।।
शमी शमयते पापं शमी लोहितकण्टका ।
धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी ।।
करिष्यमाणयात्राया यथाकालं सुखं मया।
तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिता ।।

- इति ।

गृहीत्वा ह्यक्षतां सान्द्रां शमीमूलगतां मृदम् ।
गीतवादित्रनिर्घोषैरानयेत्स्वगृहं प्रति ।
ततो भूषणवस्त्राणि धारयेत्स्वजनैः सह ।।

- इति ।

गृहमागत्य सर्वेषां नीराजनं कार्यम् । तत्र मन्त्रः -

चतुरंगबलं मह्यं निरनिष्टं व्रजत्विह ।
सर्वत्र विजयो मेऽस्तु त्वत्प्रसादात्सुरेश्वरि ।। - इति ।

---

१. पूजाप्रकारस्त्वति। आथर्वणगोपथब्राह्मणे -

अथापराजितदशम्यां पूर्वोक्ते विजयमुहूर्ते उक्तमित्याद्याश्वयुजदशमीमाहात्म्य-मुक्त्वा, 'राजा निर्गत्य भवनात्पुरोहितपुरोगम' इत्यादिप्रस्थानं प्रख्याय, नगरसीमान्ते वास्तुपूजादिक्पालपूजेत्यादिपूजाः कथयित्वा ।

मन्त्रैर्वैदिकपौराणैः पूजयेच्च शमीतरुम् ।

अमंगलानां शमनीं शमनींदुष्कृतस्य च ।।

इत्यादि शमीपूजा विहिता ।

## ।। अस्यां दशम्यां मध्वजयन्ती ।।

स्कन्द उवाच -

प्रणवप्रभवा वेदाः स्वयंभूप्रभवं जगत् ।
यथाऽम्भोजभवो ब्रह्मा तथैषानन्दसूस्तिथिः [१]।।
विजयादशमी नाम यदि सूर्योदये भवेत् ।
बुधश्रवणसंयुक्ता जयन्ती जगदीशितुः [२]।।

स्कान्दे । गोभिल उवाच -

शुक्लाश्विनदशम्यां तु जयन्ती जगदात्मनः ।
पूर्णबोधमुनेः कार्या कामितार्थप्रदायिनि ।।
सा च सूर्योदये ग्राह्या श्रेयस्कामेन सर्वदा ।।
अन्यथा नरकं याति यावदाभूतसंप्लवम् ।।

अस्यां दशम्यां कार्तिकस्नानारम्भः। तत्र मन्त्रः। 'कार्तिके[३]ऽहं करिष्यामी'ति । तिलामलकस्नाने तु 'तिलाः कृष्णे'ति ।।

आश्वयुजशुक्लैकादश्यां चैव पूजां कृत्वा देवाग्रे दुग्धव्रतं समाप्य द्विदलव्रतसंकल्पः कार्यः।

---

१. आनन्दं आनन्दतीर्थं । 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्यः'। सृते अथवा आनन्दं आनन्दतीर्थोत्साहम् ।

२. जगदीशितुः मुख्यवायोः पूर्णबोधाम्बुधेः आनन्दतीर्थस्य ।

३. कार्तिक इति -

कार्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन ।
प्रीत्यर्थं तव देवेश दामोदर मया सह ।।

इति देवपुरतः संकल्प्य प्रातःस्नानं कार्यमित्यर्थः। मया लक्ष्म्या सह ।

फलानि बहुबीजानि धान्यानि द्विदलानि च ।
कार्तिके वर्जयेत्तद्वत् द्विदलं बहुबीजकम् ।।
माषमुद्गमसूराश्च चणकाश्च कुलित्थकाः ।
निष्पावा राजमाषाश्च आढक्यो द्विदलं स्मृतम् ।।
नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्जयेत् ।
बीजेनोत्पत्तिसमये शिलया भेदने तथा [१] ।।
द्विदलं यत्र दृश्येत वर्ज्यं तद् द्विदलं स्मृतम् ।
कार्तिके वर्जयेत्तैलं कार्तिके वर्जयेन्मधु ।।

- इति स्मृतिः ।

अस्मिन्मासि उपवासकृच्छ्रचान्द्रायणादिनियमाः कार्याः । देवाग्रे दीपमाला आकाशस्य तुलस्याश्च दीपो देयः ।।

आश्विनशुक्लपूर्णिमायां आग्रयणेष्टिः कार्या । तच्चाग्रयणं त्रेधा । व्रीह्याग्रयणं यवाग्रयणं श्यामकाग्रयणं चेति । आपस्तम्बोऽपि-

वर्षासु श्यामकैः शरदि व्रीहिभिर्वसन्ते यवैः ।

- इति ।

तत्र श्यामाकाग्रयणमनित्यं । द्वयमाहिताग्रेः अनाहिताग्रेश्च नित्यं ।।

---

१. शिलया भेदने तथेति। उदाहरन्ति -

बीजमेव समुद्भूतं द्विदलं चांकुरं विना ।
दृश्यते यत्र सस्येषु द्विदलं तन्निगद्यते ।
कार्तिके वर्जयेत् ।। - इति नारदीये ।

आश्विनकृष्णद्वादश्यां दीपावलीप्रारम्भः ।

आश्विने कृष्णपक्षे तु द्वादश्यादिषु पंचसु ।
तिथिषूक्तः पूर्वरात्रे नृणां नीराजनं विधिः ।
नीराजयेयुर्देवांस्तु विप्रान् गाश्च तुरंगमान् ।।
- इति ।

कार्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे ।
यमदीपं बहिर्दद्यात् अपमृत्युर्विनश्यति ।। - इति स्कान्दे ।

दीपमन्त्रः -

मृत्युना पाशदण्डाभ्यां कालेन श्यामलायुतः [१]।
त्रयोदश्यां दीपदानात्सूर्यजः [२] प्रीयतामिति ।।

श्यामला यमभार्या ।

आश्विनकृष्णचतुर्दश्यां चन्द्रोदये तैलाभ्यङ्गस्नानं अवश्यं कार्यम् ।

आश्वयुक्कृष्णपक्षे [३] च चतुर्दश्यां विधूदये ।
तिलतैलेन कर्तव्यं स्नानं नरकभीरुणा ।।
- इति ब्राह्मे ।

तैले लक्ष्मीर्जले गङ्गा दीपावल्याश्चतुर्दशीं ।।

प्राप्येति शेषः।

प्रातः स्नानं तु यः कुर्याद्यमलोकं न पश्यति । - इति ।

---

१. श्यामलया स्वभार्यया युतः ।

२. सूर्यजः यमः। प्रीयतां प्रीङ् प्रीतौ दिवादिः विध्यादिलिङ् ।

३. आश्वयुजकृष्णपक्षे । आश्वयुजः आश्विनस्य कृष्णपक्षे।

दिनद्वये चन्द्रोदये चतुर्दशी सत्त्वे पूर्वा । 'पूर्वविद्धा चतुर्दश्यां' इति वचनात् । एवं दिनद्वये तदभावे तु अरुणोदयव्यापिनी ग्राह्या । पक्षे प्रत्यूषसमय इत्युक्तेः। तदभावे चतुर्थयामगामिनीचतुर्दशी ग्राह्या ।

तथा कृष्णचतुर्दश्यामाश्विनेऽर्कोदयात्पुरा ।
यामिन्याः पश्चिमे यामे तैलाभ्यङ्गो विशिष्यते ।।
- इति स्मृतेः।

तथा चतुर्थयामे अरुणोदयचन्द्रोदयव्याप्तचतुर्दशीनां उत्तरोत्तरं प्राबल्यमित्युक्तं भवति ।

त्रयोदशी यदा प्रातः क्षयं याति चतुर्दशी ।
रात्रिशेषत्वभावः स्यात्तदाभ्यङ्गे त्रयोदशी ।।

इति वचनं तु चतुर्थयामे चतुर्दशी स्पर्शाभावे पूर्वदिने अभ्यङ्गविषयं । तथा इनोदयात्पूर्वं चन्द्रोदयवेलायां चतुर्दश्यां तैलाभ्यङ्गः कार्यः ।

अत्र विशेषः -

अपामार्गमथो [1] तुम्बीं प्रद्युम्नाख्यमथापरम् [2]।
भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै ।।

तत्र मन्त्रः -

---

१. अपामार्गमिति । 'अपामार्गश्शैखरिको धामार्गवमयूरकौ' इत्यमरः ।
२. प्रपुन्नाटमित्येव युक्तः पाठः । निर्णयाब्धिचतुर्वर्गचिन्तामण्यादिषूक्तत्वात् । 'प्रपुन्नाटस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः' इत्यमरः । 'तगचि' इति कर्नाटकभाषायां ।

शितालोष्ठसमायुक्तसकटंकदलान्वित ।
हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ॥
- इति ।

ततो बहिर्गत्वा यमनामभिः सव्येन वाऽपसव्येन वा तर्पणं कार्यम् । यमनामानि -

यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्तात्मने नमः ॥
- इति ।

जीवत्पिताऽपि कुर्वीत तर्पणं यमभीष्मयोः ॥
- इति पाद्मे ।

चतुर्दश्यादिदिनत्रये रात्रिमुखे देवालयादौ दीपोत्सवः कार्यः ॥ इति नरकचतुर्दशी ॥

भीष्मतर्पणं माघे वक्ष्यते । आश्विनकृष्ण[३]चतुर्दश्यादि-तिथिषु यदा स्वातीयोगः तदाऽभ्यङ्गस्नानं लक्ष्मीकरम् । मुख्यतः चतुर्दशीयुक्त विधूदयः। तत्पंचत्वग्युक्तस्नाने फलविशेषः ॥
इति आश्वयुजमासः ॥

---

३. आश्विनकृष्ण इति । आश्वयुजः आश्विनस्य कृष्णपक्षे ।

## ।। अथ कार्तिकमासः ।।

कार्तिकशुक्लप्रतिपदि [1] पूर्वविद्धायां प्रातर्गोपूजा । केवलप्रतिपदि अपरविद्धायां अभ्यङ्गस्नानं । नीराजनं । रात्रौ दीपमाला कार्या । चन्द्रदर्शनानन्तरं न कार्या । अस्यामेव प्रतिपद्यपररात्रे गृहशालामध्ये पंचरंगवर्णकैस्तंडुलैर्वा बलिमालिख्य[2] सपरिवारं पूजयेत् । तत्र मन्त्रः -

बलिराज नमस्तुभ्यं दैत्यदानववन्दित ।
इन्द्रसेनामराराते विष्णुसान्निध्यदो भव ।।

- इति पाद्मोक्तेः ।

अत्र बलिमुद्दिश्य दीपगोदानादीनि कार्याणि । अत्र गोवर्धनपूजा द्यूतक्रीडा च प्रातः कार्या ।।

अथ कार्तिकशुक्लद्वितीया यमद्वितीया[3] । अस्यां भगिनीहस्तेन[4]

---

१. इयं क्षीरप्रतिपत् । अस्यां क्षीरव्रतमित्यादि । (चतुर्वर्ग चिन्तामणौ)

२. बलिमालिख्येति । चतुर्वर्गचिन्तामणौ भविष्ये -

भूमौ मण्डलके शुभे ।
बलिमालिख्य दैत्येन्द्रवर्णकैः पंचरंगकैः ।
गृहस्य मध्ये शालायां विशालायां ततोऽर्चयेत् ।।
लोकश्चापि गृहस्यान्तः शय्यायां शुक्लतण्डुलैः ।
संस्थाप्य बलिराजानं फलैः पुष्पैः सुपूजयेत् ।। - इत्यादि ।

३. यमद्वितीयेति ।

यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः ।
अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता ।। -इति भविष्ये ।

४. भगिनीहस्तेन इति । एतद्विधानमपि तत्रैव (भविष्ये)।

भोजनं नीराजनं च ग्राह्यम् । तस्याः वस्त्रालंकारादिभिः पूजा च कार्या । तदभावे पितृव्यमातुलपितृष्वसृमातृष्वसृपुत्रीहस्तेन वा भोजनं कार्यम् ।।

कार्तिकशुक्लनवमी कृतयुगादिः। सा पूर्वाह्णिकी ग्राह्या । कार्तिकशुक्लैकादशीमारभ्य पूर्णमासीपर्यन्तं भीष्मपंचकं कार्यम् । तद्विधिस्तु [1] तत्कथायां बोध्यः।। अत्र देवपूजान्ते द्विदलव्रतसमाप्तिः कार्या ।। इयमेकादशी सोमवारोत्तराषाढयुता चेदनन्तफलप्रदा ।। अस्यां द्वादश्यां वा पूर्वरात्रे देवं संपूज्य उत्थापयेत् ।।

तत्र मन्त्रः -

> ब्रह्मेन्द्ररुद्रेन्द्रकुबेरसूर्यसोमादिभिर्वन्दितवन्दनीय ।
> बुध्यस्व देवेश जगन्निवास मन्त्रप्रभावेन सुखेन देव ।।
> इयं तु द्वादशी देव प्रबोधार्थं विनिर्मिता ।
> त्वयैव सर्वलोकानां हितार्थं शेषशायिना ।।
> उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्प्रभो ।
> त्वयि सुप्ते जगन्नाथ जगत्सुप्तं भवेदिदम् ।।

---

१. तद्विधिस्त्विति । तद्विधिः भीष्मपंचकविधिः नारदीये -

> अतो नरैः प्रयत्नेन कर्तव्यं भीष्मपंचकम् ।
> कार्तिकस्यामले पक्षे स्नात्वा सम्यग्यतव्रतः ।
> एकादश्यां तु गृह्णीयाद्व्रतं पञ्चदिनात्मकम् ।। - इति ।

व्रतं गृहीत्वा पंचामृतैः पंचगव्यैः विष्णुं संस्नाप्य संपूज्य पायसं निवेद्य द्वादशाक्षरमष्टोत्तरं जप्त्वा षडक्षरेण घृताक्तान्यवान्व्रीहींश्चाष्टोत्तरशतं हुत्वा भूमौ स्वपेत् । एवं पंचदिनेषु कार्यं । विशेषस्तु हेमाद्रिकृतचिन्तामणौ द्रष्टव्यः। व्रतकथापि तत्रैव ।

उत्थिते चेष्टते सर्वं उत्तिष्ठोत्तिष्ठ माधव ।
गता मेघा वियच्चैव निर्मलं निर्मला दिशः ।।
शारदानि च पुष्पाणि गृहाण मम केशव ।
इदं विष्णुरिति प्रोक्तं मन्त्रमुत्थापने हरेः ।।

- इति।[१]

एवं देवं समुत्थाप्य तदग्रे चातुर्मास्यव्रतसमाप्तिं कुर्यात् ।
तदुक्तं भारते -

चतुर्धा गृह्य वै चीर्णं चातुर्मास्य व्रतं नरः ।
कार्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ।।

मन्त्रश्च सनत्कुमारेणोक्तः -

इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।
न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन ।।

- इति ।

व्रतं शाकादितिलाभोजनादिनियमश्च ।।

इयं द्वादशी वेदनिधिस्वामिनां पुण्यतिथिः ।।

मन्वादिश्च ।। इदं शुक्रास्तादावपि कार्यम् । आशौचे तु अन्येन कारयेत् ।।

कार्तिके शुक्लचतुर्दशी वैकुण्ठसंज्ञा । अत्र दम्पतीभोजनं कार्यम् । सा निशीथव्यापिनी ग्राह्या । दिनद्वये तद्व्याप्तौ निशीथ-प्रदोषोभयव्यापिनी ग्राह्या । उभयेद्युर्निशीथव्याप्त्यभावे तु परैवेति ।

---

१. हरेरिति । इदं वाराहपुराणे ।

अस्यामेव विश्वेश्वरप्रतिष्ठादिनत्वात् तत्प्रीत्यर्थं यदा उपवासादि क्रियते तदाऽरुणव्यापिनी ग्राह्या । तत्र त्रयोदशीयुतचतुर्दश्यां [१] उपवासं कृत्वा चतुर्दश्यां अरुणोदये देव्या सह विश्वेश्वरं संपूज्य पारणं कुर्यादिति ।।

कार्तिकपूर्णिमा मन्वादिः। इयं कृत्तिकायोगे महाकार्तिकी-संज्ञा । अस्यां स्वामिकार्तिकेयदर्शनं महाफलप्रदम् । तथा भरणी-नक्षत्रयोगे रोहिणीयोगे च महाकार्तिकीत्युच्यते । इयं मत्स्यजयन्ती च। अस्यां त्रितंतुभिर्वर्तिकां कृत्वा दीपोत्सवः कार्यः। अत्र वृषो-त्सर्गः प्रशस्तः।।

कार्तिकबहुलचतुर्थी [२] विद्यानिधिस्वामिनां पुण्यतिथिः।।

बहुलाष्टम्यां तु कालभैरवपूजा कार्या । सा मध्यरात्रव्यापिनी ग्राह्या ।। चतुर्दशी तु श्रीपद्मनाभतीर्थस्वामिनां पुण्यतिथिः ।। इति कार्तिकमासः।।

## ।। अथ मार्गशीर्षमासः।।

शुक्लपंचम्यां तु नागपूजा कार्या। सा परविद्धा कार्या।। षष्टी तु चंपाषष्टी । सा परा ग्राह्या । इयमेव स्कन्दषष्ठीत्युच्यते । सा[३] पूर्वयुता ग्राह्या । अत्र सुब्रह्मण्यक्षेत्रे स्कन्दपूजा विशेषफलप्रदा ।।

---

१. चतुर्दश्यां । हे.च.चि.भविष्ये -

कार्तिकस्य सिते पक्षे चतुर्दश्यां नराधिप ।

सोपवासस्तु संपूज्य हरिं रात्रौ जितेन्द्रिय ।। - इत्यादि ।

२. बहुलचतुर्थी कृष्णचतुर्थी । ३. सा । स्कन्धषष्ठीत्वेनेत्यर्थः।

शुक्लदशमी सत्यनिधितीर्थस्वामिनां पुण्यतिथिः।। एकादशी तु सत्यनाथतीर्थस्वामिनां पुण्यतिथिः।। मार्गशीर्षपौर्णमासी दत्तात्रेय-जयन्ती [१]।।

मार्गे कृष्णप्रतिपदि रघुनाथमुनिस्वामिनां पुण्यतिथिः।। पंचमी तु अक्षोभ्यतीर्थानां पुण्यतिथिः।।

सप्तम्यादित्रयं तिस्राष्टकं ।। धनुःसंक्रान्तिमारभ्य मकर-संक्रान्तिपर्यन्तं अरुणोदये देवपूजां कृत्वा मुद्गान्नादिनैवेद्यं समर्प्य ब्राह्मणभोजनं कार्यम् ।। इति मार्गशीर्षमासः।।

## ।। अथ पौषः।।

तत्र शुक्लाष्टम्यां बुधवारश्चेत्तदा जपहोमब्राह्मणार्चनादिकं महाफलप्रदम् । रोहिणीयोगश्चेत्तदा विशेषः।।

दशम्यां माघस्नानारम्भः ।। पौषशुक्लैकादशी मन्वादिः।। श्रीरघूत्तमतीर्थस्वामिनां पुण्यतिथिश्च ।।

कृष्णसप्तम्यादित्रयं तिस्राष्टकम् ।।

---

२. दत्तात्रेयजयन्ती । उक्तंच स्कान्दे सह्याद्रिखण्डे -

मार्गशीर्षे तथा मासि दशमेऽह्नि सुनिर्मले।
मृगशीर्षयुते पौर्णमास्यां यज्ञस्य वासरे ।।
जनयामास देदीप्यमानं पुत्रं सती शुभम् ।
तं विष्णुमागतं ज्ञात्वा अत्रिर्नामा करोत्स्वयम् ।
दत्तवान् स्वस्य पुत्रत्वाद्दत्तात्रेय इतीश्वरः।। - इति ।

इयं प्रदोषव्यापिनी ग्राह्येति वृद्धाः।

पौषकृष्णसप्तमी श्रीनरहरितीर्थानां पुण्यतिथिः।। कृष्णचतुर्दशी विद्याधीशस्वामिनां पुण्यतिथिः ।।

पौषामावास्यायां आदित्यवारे श्रवणव्यतीपातैर्दिवा योगे अर्धोदयपर्वकालः।

अमार्कश्रवणे पाते युक्ता चेत्पौषमाघयोः।

अर्धोदयः स विज्ञेयो राहुपर्वशताधिकः ।। - इति । किंचिन्न्यूने महोदयपर्वकालः। तस्यां स्नानदानादिकं महाफलप्रदम् ।। इति पौषः।।

## ।। अथ माघमासः।।

अत्र तिलामलकतुलसीमूलमृत्तिकाभिर्माघस्नानं कार्यं । एवं कार्तिके वैशाखेऽपि । संपूर्णमाघे स्नानाशक्तौ मकरसंक्रान्तौ रथ-सप्तम्यां पूर्णिमायामिति । दशम्यादिदिनत्रये वा त्रयोदश्यादिदिनत्रये वा पौर्णमास्यां वाऽवश्यं स्नानादिकं कार्यं। शीतलोदकस्नानाशक्तौ उष्णोदकस्नानं कार्यम् ।

अत्र नियमः । अग्नितापनं अभ्यङ्गं परान्नं स्त्रीसंगादिकं न कार्यम् । त्रिभागतिलेषु चतुर्थभागशर्करां मिश्रीकृत्य माघमासे ब्राह्मणाय प्रत्यहं दातव्यं । स्वेनापि भक्षणीयं । तिलहोमश्च कार्यः। अत्र कंबलकंचुकपादुकोपानहवस्त्राग्नितापनादिदानं दम्पतीभोजना-दिकं कार्यम् ।।

माघशुक्लसप्तमी रथसप्तमी ।। मन्वदिश्च । तत्र सन्तानाभि-वृद्ध्यर्थं कूष्माण्डदानं सूर्यरथलेखनादिकं च कार्यम् ।

इयं अरुणोदयव्यापिनी ग्राह्या ।

सूर्यग्रहणतुल्या तु शुक्ले माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ।।

- इति विष्णुस्मृतेः।

सप्तार्कपर्णानि सप्तबदरीपत्राणि च शिरसि धृत्वा स्नात्वा सूर्यायार्घ्यं दीपं तिलपिष्टं च दद्यात् ।।

शुक्लाष्टमी भीष्माष्टमी । अत्र भीष्मतर्पणं कार्यम् ।
तर्पणमन्त्रः -

भीष्मः शान्तनवो धीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् ।।
वैयाघ्रपदगोत्राय सांकृत्यप्रवराय च ।
अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे ।।
वसूनामवताराय शन्तनोरात्मजाय च ।
अर्घ्यं ददामि भीष्माय आबालब्रह्मचारिणे ।।

- इति ।

एतच्च जीवत्पितृकेणापि सव्येन कार्यम् ।।

माघशुक्लनवमी[1] श्रीमदानन्दतीर्थश्रीमच्चरणानां पुण्यतिथिः।

---

१. माघशुक्लनवमीति । अस्यामेव श्रीमदानन्दतीर्थभगवत्पादाचार्याणां बदरिकाश्रम-प्रवेशः ।

माघशुक्लद्वादशी भीमद्वादशी [१]। स्नानदानादिना अतिफलप्रदा ।।
पौर्णमासी तु गुरुचन्द्रयुक्ता मघायुक्ता चेन्महामाघी ।
तथा - मेषराशौ शनिश्चेत्स्यात्सिंहे च गुरुचन्द्रयोः।
भास्करश्रवणर्क्षे च महामाघी च सा स्मृता ।।
माघकृष्णसप्तम्यादिदिनत्रयं तिस्त्राष्टकम् । इयं चाष्टमी सीताप्रादुर्भावतिथिः। अस्यां सीतापूजायां महाफलम् ।।

माघकृष्णचतुर्दशी महाशिवरात्रिः। सा पूर्वविद्धा। अर्धरात्रव्यापिनी वार्षिकी शिवरात्रिः। प्रतिमासं कृष्णचतुर्दशी प्रदोषव्यापिनी शिवरात्रिर्ज्ञेया । दिनद्वयेऽर्धरात्रव्याप्तौ परा । प्रदोषव्याप्तेराधिक्यात् ।

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ।।

इति सामान्यवाक्यस्यैव तत्परत्वात् ।
पारणं तु द्वितीयदिने चतुर्दशीमध्य एव । नतु चतुर्दश्यन्ते ।

तिथीनां एव सर्वासां उपवासादिकं च यत् ।
तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशीम् ।।

इति पर्युदासात् ।

उपोषणं चतुर्दश्यां चतुर्दश्यां तु पारणम् ।
कृतैः सुकृतलक्षैश्च लभ्याचेदथवा नवा ।।

---

१. भीमद्वादशी । अस्यां निराहार इति हेमाद्रिणोक्तम् । एतस्या व्रतविधिः कथा च तत्रैव स्पष्टतरा ।

ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै ।
संस्नातानि भवन्तीह भूतायां पारणे कृते ।।

इति विशेषफलोक्तेश्च । अयं तु निर्णयः शैवानाम् । न तु वैष्णवानाम् । वैष्णवैस्तु तद्दिने पुराणप्रसिद्धशिवप्रतिमायां तदभावे वा शिवान्तर्गतमुख्यप्राणान्तर्गतसंकर्षणपूजा कार्या । ब्राह्मणभोजनाद्युत्सवः कार्यः। 'यास्त्वन्यदेवतिथयस्तासु विष्णुं प्रपूजयेदि'ति वराहपुराणोक्तेः । उपवासो नैव कार्यः।।[१]

माघामावास्या युगादिः। सा च धनिष्ठया शततारेण युक्ता चेन्महाफलप्रदा । तस्यां पितृभ्यः तिलान्नदानं वर्षायुततृप्तिदम् ।। इति माघमासः।।

## ।। अथ फाल्गुनमासः।।

शुक्लषष्ठी सत्यव्रतस्वामिनां पुण्यतिथिः ।। शुक्लत्रयोदश्यां प्रदोषव्यापिन्यां पौर्णमास्यां वा प्रदोषव्यापिन्यां भद्रारहितायां कामदहनम् ।। द्वितीयदिने धूलिप्रक्षेपक्रीडा च ।। पूर्णिमायां पोलिकादहनं[२] च तत्तद्देशाचारतो ज्ञेयम् ।।

अत एव -

प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा ।
तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे ।।

---

१. उपवासो नैव कार्यः । वैष्णवानां अन्यव्रतनिषेधादिति भावः।

२. पोलिकादहनेति । इदं भविष्योत्तरे पुराणे कृष्णधर्मसंवादान्तर्गतरघुराजपार्थसंवादे ।

इति माधवादिलिखितानि वचनानि सन्ति । तेषां निर्मूलत्वाभिप्राये प्रारम्भकव्यवहारेण स्ववार्तिके होलिकाचारप्राप्तिरित्युक्तम् । होलायाः स्मृतिपुराणाद्युक्तत्वे तु आन्ध्रदेशे त्रयोदश्यां देशान्तरे पौर्णमास्यां अनुष्ठानं च न स्यात्। नापि शिष्टाचारमूला होलिका । कामुकैरनुष्ठीयमानत्वेऽपि शिष्टैरननुष्ठितत्वात् ।।
इयं पूर्णिमा मन्वादिः ।। इयं दोलापौर्णमासी च ।।

नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् ।
फाल्गुन्या संयुतो भूत्वा गोविन्दस्य पुरं व्रजेत् ।।

- इत्युक्तेः।

फाल्गुनकृष्णप्रतिपदि वसन्तोत्सवः [१]। सा चौदयिकी ग्राह्या । दिनद्वये तथात्वे पूर्वा । तत्र चन्दनेन सह चूतकुसुमं प्राश्यम् ।।
फाल्गुनकृष्णद्वितीया [२] चातुर्मास्यद्वितीया । अस्यां अनध्यायः ।
गर्गः -

शुचावूर्जे तपस्ये च या द्वितीया विधूक्षिताः।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति महर्षयः ।। - इति ।

---

१. वसन्तोत्सव इति। इदं भविष्योत्तरे धर्मकृष्णसंवादे 'वसन्ते किंशुकाशोक' इत्यादिना स्पष्टम् (हेमाद्रिकृतचतुर्वर्गचिन्तामणौ) ।
तत्र मन्त्रः -

चूतमग्र्यं वसन्तस्य माकन्द कुसुमं तव।
सचन्दनं पिबाम्यद्य सर्वकामार्थसिद्धये ।। -इति।

२. कृष्णद्वितीयेति । शुचौ आषाढे । ऊर्जे कार्तिके । तपस्ये फाल्गुने । शुचिस्त्वयं आषाढे । 'कार्तिके बाहुलोर्जौ कार्तिकिकौ । स्यात्तपस्यः फाल्गुनिक' इति नामलिंगानुशासनम् ।

**सप्तम्यादिदिनत्रयं तिस्राष्टकम् ।। अमावास्या [१] मन्वादिः।। इति फाल्गुनमासः।।**

**इति श्रीमच्छलकुलकरिकुम्भविदारिभिः। [२]**
**पूर्णः कालतरङ्गोऽभूत्कृते स्मृत्यर्थसागरे ।।**
**।। श्रीछलारिनरसिंहाचार्यकृते स्मृत्यर्थसागरे**
**कालतरङ्गः समाप्तः।।**
**।। श्रीकृष्णार्पणमस्तु।।**

***

**

---

१. अमावास्येति । इयमपराह्णव्यापनी ग्राह्येत्यन्यत्र ।

२. इति श्रीमदिति । इति एवं छलानां मर्यादोल्लंघनां । मर्यादा च स्मृतिरूद्ध्यनुगमनं । कुलानि समुदायाः त एव करिणः तेषां कुम्भानि तानि विदारयन्ति तच्छीला तथोक्ताः। ते च ते छलकुलकरिकुम्भविदारिणः तथोक्ताः तैः छलार्युपनामकैरित्यर्थः। कृत इति शेषः । कालतरंगः कालनिर्णय इत्यर्थः। पूर्णः संपूर्णः ।।

## श्रीछलारिनरसिंहाचार्यप्रणीतस्मृत्यर्थसागरे

# ।। अथ आशौचतरङ्गः ।।

।। श्रीवेदव्यासाय नमः ।।

।।ओं।। अथाऽशौचं निर्णीयते । आशौचं द्विविधम् । सूत्याशौचं मृताशौचं चेति । तत्र -

आचतुर्थात् भवेत् स्रावः पातः पंचमषष्ठयोः ।
अत ऊर्ध्वं प्रसूतिः स्यात् स्रावे मातुस्त्रिरात्रकम् ।।
पाते [१] मातुर्यथामासं सपिंडानां दिनत्रयम् ।।

अत्र विशेषः -

गर्भस्रावे प्रथममासत्रये मातुः रजस्वलावद्दिनत्रयं सूतकम् । स्रावे तु सपिंडानां सूतकाभावः ।

सद्यः शौचं सपिंडानां गर्भस्य पतने भवेत् । - इत्युक्तेः ।

सपिंडानां स्नानं विवक्षितम् । अकरणे शुद्धेरभावात् । एवमुत्तरत्रापि सम्बन्धः । शौचशब्देन स्नानमात्रं ग्राह्यम् ।

---

।। अथ आशौचतरङ्गः ।।

अथाऽशौचे प्राय आह्निकाकर्तव्यत्वात् प्रकल्प्य च अपवादविषयमिति न्यायेन आदौ आशौचं निर्णीयते ।

१. पात इति । तथोक्तं त्र्यम्बकेण - 'गर्भिण्याः पंचषष्ठमासयोर्गर्भनाशः पात इत्युच्यते । तत्र गर्भिण्या माससमसंख्यया पंच षट् दिनानि यथाक्रममाशौचमिति ।

ज्ञातीनां त्रिरात्रमाशौचं तु -

अजातदन्ते तनये शिशोर्गर्भच्युते तथा ।
सपिंडानां तु सर्वेषामेकरात्रमशौचकम् ।।

इति यमोक्त्या सन्निहितानां त्रिरात्रं व्यवहितानामेकरात्रमिति व्यवस्था सा विकल्प्यते । सप्तममासादौ तु प्रसूतिः। तदा दशरात्रं सूतकम् । इदं सर्ववर्णविषयम् ।

सूत्याशौचे विशेषस्तु -

जातो विप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्यः पंचदशाहेन शूद्रो मासेन शुध्यति ।।

इति स्मृत्युक्तो ज्ञेयः।

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।

ब्राह्मणादि [१] त्रिवर्णा स्त्री दशाहमस्पर्शा । शूद्री तु त्रयोदशाहम् । ततः परेऽह्नि स्नानात् स्पृश्या । सूतिकास्त्रीव्यतिरिक्तज्ञातीनां स्पर्शे तु न दोषः। सूतिकास्पर्शे तु रजस्वलास्पर्शवत् सचैलस्नानं । अन्यगोत्रजानां सूतिकिभिः सह शयनभोजनकरणे तत्समं सूतकं ।

यस्तैः सह सपिंडोऽपि प्रकुर्याच्छयनासनम् ।
बान्धवो वा परो वाऽपि स दशाहेन शुध्यति ।। - इत्युक्तेः।

जनकस्य तु पुत्रजन्मश्रवणानन्तरं स्नानपर्यन्तमस्पर्श्यत्वम् । मातुः

---

१. ब्राह्मणादि। ब्राह्मणक्षत्रियवैश्यशूद्रजातीयाः। शावाशौचं स्नानेनैव शुद्धिर्वा नक्षत्रपर्यन्तं सूर्यदर्शनपर्यन्तमित्यादि । यथायथं ग्राह्यम् ।

पुत्रजनने दशाहानन्तरं स्पर्शत्वेऽपि विंशतिदिनपर्यन्तं सत्कर्मानधिकारः। कन्याजनने तु त्रिंशद्दिनपर्यन्तम् ।

यदि माता पुत्रवती विंशाहोभिर्विशुध्यति ।
मासेन कन्याजननी ततः कर्माणि कारयेत् ।।
- इत्युक्तेः।

दशाहमध्येऽपि पितुः प्रथमदिवसे षष्ठे दशमे चैव ब्राह्मणेभ्यो दानादौ सूतकाभावः ।

प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ।।
देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनि ।
आयान्ति तस्मात्तदहः पुण्यं षष्ठं च सर्वदा ।। - इत्युक्तेः।

पुत्रशब्दोऽपत्यमात्रपरः।।

अत्र विशेषः। दशाहसूतकं तु सपिंडानां सप्तपुरुषमध्यस्थानां । ततः परे चतुर्दशपुरुषपर्यन्तं सप्तपुरुषस्थाः सोदकाः। तेषां त्रिदिनमाशौचम् । चतुर्दशपुरुषेभ्यः परे सप्तपुरुषस्थाः ते गोत्रजाः। तेषां तु एकाहं सूतकम् । मृताशौचमप्येवमेव ज्ञेयमिति ।

पुत्रजन्मसपिंडानां दशाहाच्छुद्धिरिष्यते ।
त्र्यहादेकोदकानां च गोत्रजानामहः स्मृतम् ।।
- इत्युक्तेः।

इदं तु स्त्रीप्रसवेऽपि समम् ।

अपुत्राणां यथा स्त्रीणां सपिंडं साप्तपौरुषम् ।

प्रेतानां भर्तृसापिंड्यं प्राह देवः प्रजापतिः ।।

- इति कौर्मोक्तेः।

अथ जननान्तरं नाभिच्छेदात्पूर्वं शिशौ मृते पितुः सर्वेषां ज्ञातीनां त्रिदिनं सूतकम् । मातुस्तु दशाहं सूतकम् । नाभिच्छेदात्परतः मृतौ च मृतस्य शिशोः प्रसवे च पितृमात्रादिसर्वेषां सूतकं दशाहम् । एतस्मिन् प्रसवाशौचे ज्ञातीनां शिशुमरणनिमित्तं स्नानमात्रं च । दशाहमध्ये मृतौ ज्ञातीनां उर्वरितदिनैः जाताशौचशुद्धिः।

दशाहाभ्यन्तरे बाले प्रमृते तस्य बान्धवैः।
शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ।।

- इति बृहन्मनूक्तेः।

## ।। अथ मृताशौचम् ।।

ततः दशाहानन्तरं नामकरणात्पूर्वं ज्ञातीनां स्नानमात्रं -

प्राक्चूडाकरणाद्बालः प्राग्दन्तजननाच्छिशुः।
आपंचवर्षात्कौमारः पौंगंडो नवहायनः ।।
शिशौ मृते दुग्धदानं भूमौ बाले तु पायसम् ।
यत्र प्रम्रियते बालस्तत्र दीपः प्रदीयते ।।
अन्नं समानवयसां तद्वस्त्रादीनि दापयेत् ।
भूमौ निक्षेपणस्थाने दुग्धपायसदापनम् ।।

तदुत्तरं दन्तजननात् पूर्वं दाहे कृते अहोरात्रं -

अदन्तजाते तनये शिशौ गर्भच्युते सति ।
सपिंडानां तु सर्वेषां अहोरात्रमशौचकं।। - इति यमोक्तेः।

दाहाभावे तु स्नानमात्रं -

'अदन्तजाते प्रेते सद्य एव न अस्य अग्निसंस्कारः' इति विष्णुः। दाहाभावे स्नानमात्रोक्तेः।

आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता ।
त्रिरात्रमाव्रतादर्वाक् दशरात्रमतः परम् ।।

- इति याज्ञवल्क्योक्तेश्च।

आचूडात् चौलकर्मणः प्राक् । नैशिकी अहोरात्रं । आव्रतात् उपनयनात् पूर्वं त्रिदिनम् । अतः परं उपनयनानन्तरं दशरात्रम् । दाहविकल्पं चाऽह लौगाक्षिः -

तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च ।
सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ।।

- इति ।

तूष्णीं मन्त्रं विना । संस्कारं अग्निसंस्कारं । कृतचूडानां कृतचौलकर्मणां । बालानां मन्त्रं विनैव अग्निसंस्कारं कृत्वा प्रेतनाम्ना मन्त्रं विनैव उदकं च देयम् । अन्यत्र चौलकर्माभाव इच्छा चेत् द्वयम् । अग्निसंस्कारोदकदानं कार्यम् । इच्छाभावे न कार्यमिति स्मृतिवाक्यार्थः।

दहनाभावे तु द्विवर्षपर्यन्तं खननमेव । 'ऊनद्विवर्षं निखनेत्' इत्युक्तेः। मृतस्य बालस्य शवं घृतेनाभ्यज्य स्नापयित्वा वस्त्रेण वेष्टयित्वा भूमौ निक्षिपेत् ।

वर्षद्वयात्परतो दाह एव । प्रथमवर्षादौ कृतचूडस्य दाहोदकदानं त्र्यहः सूतकं च । तृतीयवर्षेऽपि अकृतचूडस्य दाहः ।

त्र्यहः सूतकं च । एषामनुगमनं च । भूमौ तिलकुशैर्विना पिंडदानं च कार्यम् ।

उदकं पिंडदानं च कृतचूडे विधीयते ।।

- इत्युक्तेः।

उदकशब्दो दाहोपलक्षकः। चूडाशब्दः तृतीयवर्षोपलक्षकः। एतत्सर्वं सपिंडानां ।

मातापित्रोस्तु दशाहोर्ध्वमुपनयनपर्यन्तं त्रिरात्रमेव । दन्तजाते शूद्रे तु पंचरात्रः। ततः पूर्वं त्र्यहः।

शूद्रे त्रिवर्षन्यूने तु मृतशुद्धिस्तु पंचभिः।
अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते ।
विवाहोर्ध्वं षडब्दाद्वा मृते शूद्रे तु मासतः।।

- इति स्मृतिः।

कन्यायां तृतीयवर्षात् प्राक् मृतायां ज्ञातीनां स्नानमात्रं ।

आचूडायां तु कन्यायां सद्यः शौचं विधीयते ।

- इत्यापस्तम्बोक्तेः।

अजातदन्तायास्तु मातापित्रोरेकाहः। ततः परं त्र्यहमिति माधवः। चौलोत्तरं वाग्दानात्पूर्वं तु मृतायां सपिंडानां एकाहः। वाग्दानान्तरं विवाहात्पूर्वं तु मृतायां पितृकुले भर्तृकुले त्रिरात्रम् ।

अवारिपूर्वं प्रेतात्तु या नैव प्रतिपादिता ।
असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम् ।।

- इति मरीच्युक्तेः।

कन्यायां विवाहात्पूर्वं रजस्वलायां तु पितुर्मातुर्यावज्जीवमशौचम् ।

पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृता ।
तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति ।।

- इत्युक्तेः ।

कन्यायां विवाहानन्तरं पितृकुले नाशौचं । मातापित्रोस्तु त्रिरात्रं । दन्तजननान्तरं विवाहात् पूर्वमपि कन्यायाः पितृगेहे प्रसवेऽपि मातापित्रोः त्रिरात्रमाशौचम् । भ्रातुस्त्वेकरात्रम् ।

दत्ता नारीपितुर्गेहे सूयेताऽथ म्रियेत वा ।
तद्बन्धुवर्गस्त्वेकेन शुध्येत्तज्जनकस्त्रिभिः ।। -इति ब्राह्मोक्तेः।

## ।। अथ ज्ञात्याशौचम् ।।

'दशरात्रमतः परमि'त्युक्तेः। आशौचं ब्राह्मणादीनां उपनयनानन्तरं प्रवर्तते । तत्रापि विशेषः।

क्षत्रस्य [1] द्वादशाहानि विशः पंचदशैव तु ।
त्रिंशद्दिनानि शूद्रस्य .. ।।[2]

- इति याज्ञवल्क्योक्तेः।

मातापित्रोर्मरणे पुत्रस्य द्वादशाहपर्यन्तं दानाध्ययनादि वर्ज्यम् । और्ध्वदेहिकनिमित्तं तु दानं विशेषविहितत्वात् कर्तव्यमेव । ज्ञातीनां

---

१. क्षत्रस्येति । मिताक्षरायां पराशरशातातपादिवचनैकवाच्यता कृता तत्र द्रष्टव्यम् ।

२. 'तदर्धं न्यायवर्तिनः' इति एतच्छ्लोकस्य चतुर्थः पादः । न्यायवर्तिनः शूद्रस्य त्रिंशद्दिनानां अर्धं अशौचं इत्यन्वयः ।

तु दशाहमात्रं दानादि वर्ज्यम् । प्रसवान्मरणाच्च पूर्वसंकल्पितानां द्रव्याणां दानं तु कार्यमेव । इति सगोत्राशौचम् ।।

## ।। अथ असगोत्राशौचम् ।।

स्वपुत्र्याः पतिगेहे प्रसवे तु पित्रादीनामाशौचं नास्ति । 'दत्ता नारी पितुर्गेहे' इति विशेषणात् । पुत्र्याः पितृगेहादन्यत्रापि मृतौ मातापित्रोस्त्रिरात्रमाशौचमस्त्येव ।

बैजकादभिसंबन्धादनुरुध्यादघं त्र्यहम् ।।

- इति स्मृतेः ।

बैजकादभिसम्बन्धात् रेतोरूपबीजसम्बन्धात्तु त्र्यहं त्रिदिनम् । अघं सूतकम् । पिता माता च अनुरुध्यात् कुर्यादिति स्मृत्यर्थः। मातापित्रोर्मृतौ पुत्रीणां त्रिरात्रम् -

पुत्री गेहेऽथवान्यत्र पितरौ प्रमृतौ यदि ।
पुत्र्यास्त्रिदिनमाशौचं दशाहाभ्यन्तरं भवेत् ।।
दशाहानन्तरं पुत्री पक्षिण्याशौचभाग्भवेत् ।
मातुः सपत्न्यां तुल्यायां मातुलान्यामहो भवेत् ।।

- इति ।

भगिन्याः भ्रातुर्गेहे मृतौ भ्रातुस्त्रिरात्रम् । अन्यत्र मृतौ पक्षिणी । दौहित्रे भागिनेये च श्वशुरयोश्च पक्षिणी । जामातरि च मातामहे मातामह्यां पितृष्वसामातृष्वस्रोर्मातुलमातुल्योश्च स्वगृहे त्रिरात्रम् । अन्यत्र पक्षिणी । एकरात्रम् ।

तथा शालके वैष्णवे देशाधिपतौ ग्रामाधिपतौ च एकरात्रं ।

तथा यत्किंचिच्छरीरसंबन्धे सति सचैलं स्नानमात्रम् ।

बन्धुत्रये च स्वगृहे त्रिरात्रम्। अन्यत्र चैकरात्रम्। बन्धुत्रयं [1] तु आत्मभगिनी तत्पुत्रादयः आत्मबान्धवाः । पितृष्वसा तद्भर्ता तत्पुत्राः पितृबान्धवाः । मातृष्वसृतद्भर्ता तत्पुत्रा मातुलमातुलान्यश्च मातृबान्धवाः ।

असपिंडे स्ववेश्मनि मृते गृहस्वामिन एकरात्रम् । गृहमध्ये तु मृतौ तु तद्गृहस्थो मृन्मयजीर्णभाण्डानि पक्कान्नं च त्यक्त्वा गोमयेनानुलिप्य कुशोदकैर्गायत्र्यादिमन्त्रैः ब्राह्मणैः प्रोक्षयेत् । ग्राममध्ये यावच्छवस्तिष्ठति तावत्पर्यन्तं आशौचम् । निर्गते शुचितामियात् । असपिंडस्यापि और्ध्वदैहिकक्रियाकर्तुः दशाहमाशौचं । सन्ध्यावन्दनादीनां न लोपः। शवस्पर्शे तु दिवा चेन्नक्षत्रदर्शनानन्तरं स्नानेन शुद्धिः । रात्रौ चेत् आदित्य दर्शनानन्तरम् ।

सूतकिभिः सह वासे अनापदि तदन्नाशने तत्समं सूतकम् । तथापि सन्ध्यावन्दनौपसनादिकं तु कार्यमेव । तदुक्तम् -

आशौचं यस्य संसर्गादापतेद्गृहमेधिनः।
क्रियास्तस्य न लुप्यन्ते गृह्याणां च न तद्भवेत् ।।

---

१. बन्धुत्रयमिति । आत्मपितृष्वसृमातुलपुत्राः, पितुः पितृष्वसृमातृष्वसृमातुलपुत्राः, मातुः पितृष्वसृमातृष्वसृमातुलपुत्राः - इति विज्ञानेश्वरः । (निर्णयसिंधौ)

आत्मपितृष्वसुःपुत्राः, आत्ममातृष्वसुःसुताः, आत्ममातुलपुत्राः विज्ञेयाः आत्मबान्धवाः । पितुः पितृष्वसुःपुत्राः, पितुः मातृष्वसुःसुताः, पितुः मातुलपुत्राः विज्ञेयाः पितृबान्धवाः। मातुः पितृष्वसुःपुत्राः, मातुः मातृष्वसुःसुताः, मातुः मातुलपुत्राः विज्ञेयाः मातृबान्धवाः इति । (धर्मसिंधौ)

गृह्याणां औपासनादीनाम् । तत्तु लोपादिकं न भवेत् । जनना-न्मरणाद्वा पूर्वसंकल्पितद्रव्यस्य भोजने तु न सूतकम् । यद्यसगोत्रः स्नेहेन मौल्येन वा प्रेतदाहादिकं कृत्वा दशाहादि कर्म कुर्यात्तस्य दशाहः सूतकम् ।

धर्मार्थं दाहादौ तु -

प्रेतसंस्पर्शसंस्कारैः ब्राह्मणो नैव दुष्यति ।
ओढा चैवाग्निदाता च सद्यः स्नानेन शुध्यति ।।
अनाथप्रेतसंस्कारात् कोटियज्ञफलं लभेत् ।।

-इति स्मृतेः।

यत्तु वृद्धात्रिः **स्पर्शदोषे** विशेषमाह -

सूतकाद्विगुणं शावं शावाद्विगुणमार्तवम् ।
आर्तवाद्विगुणा सूतिस्ततोऽपि शवदाहकः ।।

- इति ।

सूतकात् जननसूतकात् । शावं मृतसूतकम् । द्विगुणं स्पर्शनेन द्विगुणदोषापादकम् । एवमुत्तरत्र । आर्तवं रजस्वलात्वम् । सूतिः प्रसविनी । शवानुगमने तु पुनःस्नानं कार्यम् ।

अथ रात्रौ जनने मरणे रजस्वलायां वा रात्रिं त्रिभागीकृत्य आद्यभागद्वयेचेत् पूर्वदिनम् । अन्त्यतृतीयभागे तु परदिनम् । आहिताग्निव्यतिरिक्तस्य मरणदिनमारभ्य ज्ञातीनां आशौचम् । आहिताग्निः प्रवासे मृतश्चेत्तत्रामन्त्रकं दग्ध्वा यदाऽग्निहोत्रस्थण्डिले विधिना पुनर्दाहः क्रियते तदा ज्ञातीनां तद्दिनमारभ्य सूतकम् ।।

## ।। अथ अतिक्रान्ताशौचम् ।।

तत्र दशाहाद्याशौचमध्ये जनने मरणे च ज्ञाते तच्छेषेण शुद्धिः ।

विगतं तु विदेशस्थं श्रुणुयाद्यो ह्यनिर्दशम् ।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ।।

- इति मनूक्तेः।

विगतं मृतम् । इदं तु पुत्रज्ञात्यादिसाधारणम् ।।

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः।
श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ।।

इति वचनं दशाहानन्तरश्रवणपरम् । जनने मरणे वा प्रथमदिना-दूर्ध्वं ज्ञाते पुत्रादीनां शेषेणैव शुद्धिरिति स्मृत्यर्थसारषडशीत्यपरा-कोक्तेः।

दशाहादूर्ध्वं श्रवणे ज्ञातीनां सूतकं तु -

मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी भवेत् ।
अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति ।।

इति स्मृत्युक्तं ज्ञेयम् ।

जनने त्वतिक्रान्ताशौचं नास्त्येव । 'नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि' इति देवलोक्तेः। पितुस्तु स्नानमात्रम् ।

निर्दशज्ञातिस्मरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः।।

- इति मनूक्तेः।

इदं त्रिरात्राद्याशौचं एकदेशे । देशान्तरे तु स्नानमात्रम् ।

देशभेदस्तु -

यत्र भाषाभेदः भागीरथीगोदावरीकृष्णाकावेर्यादिमहानदी-व्यवधानं महापर्वतव्यवधानं त्रिंशद्योजनव्यवधानं वा बोध्यम् ।
केचित्तु, बृहस्पतिरपि -

देशभेदो नदीभेदो निकटेऽपि भवेद्यदि ।
न तु देशान्तरं प्रोक्तं स्वयमेकं स्वयम्भुवा ।।

तदेवं स्मृत्यन्तरे विवृतम् -

नद्यन्तरे च भिन्नाद्रौ अन्तरं योजनत्रयम् ।
तत्र स्नानेन शुद्धिः स्यादिति प्राहुर्मनीषिणः ।।

- इति ।

दशाहमध्ये श्रुतं चेत् देशभेदेऽपि शेषदिवसेभ्य एव शुद्धिः। इदं तु मातापितृव्यतिरिक्तविषयम् ।

पुत्रस्य मातापितृमरणश्रवणे देशान्तरे कालान्तरेऽपि श्रवणादिदशाहान्तं संपूर्णमस्त्येव । एवं दम्पत्योः परस्परं । सपत्नीषु च ।

सापत्न्यमातरस्तु -

पितृपत्न्यामतीतायां मातृवञ्च द्विजोत्तमः।
संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेत् ।।

इत्युक्तेः कालान्तरे देशान्तरेऽपि त्रिरात्रम् ।

## ।। अथ अशौचसंपाते[१] विशेषः।।

तत्र यदा एकस्मिन्नेव दिने सूतके सूतकं मृतके मृतकं समं प्राप्तं तत्र तन्त्रेण उभयोः शुद्धिः। यदा तु द्वितीयादिदिनेषूत्तरम् । जातसूतकं जातसूतके मृतके मृतकं वा स्यात्समं न्यूनं वा तदा पूर्वशेषेणैव शुद्धिः।

अन्तरा जन्ममरणशेषाहोभिर्विशुध्यति ।

- इति याज्ञवल्क्योक्तेः।

अन्तरा मध्ये । ज्ञाते इति शेषः। ज्ञातस्यैव जननादेः आशौच-निमित्तत्वात् ।

अज्ञातेनैव दोषः स्याच्छ्राद्धादिषु कथंचन ।

- इत्युक्तेः।

पूर्वोत्पन्नाशौचस्य संपूर्णचरणानन्तरं पूर्वाशौचमध्योत्पन्न-स्यापि श्रवणे उत्तरमप्युर्वरितं कार्यमेव । त्र्यहाद्यल्पाशौचमध्ये दशाहादिमहाशौचप्राप्ते उत्तरेणैव शुद्धिः। न पूर्वशेषेण । समाने आशौचसंपाते प्रथमे समापयेत् ।

असमानं द्वितीयेन धर्मराजवचो यथा ।

- इति शंखोक्तेः।

असमानं अधिकाशौचमिति शेषः। यदा जातसूतके शावं समं न्यूनमधिकं वा तदा जाताशौचशेषाच्छावाशौचस्य न शुद्धिः।

मृतेन शुद्ध्यते शावं न मृतं जातकेन तु । - इत्युक्तेः।

---

१. संपाते प्राप्ते ।

अतो यदा दशाहजननमध्ये तदन्ते वा त्र्यहादि शावं तदा पूर्वेण न शुद्धिः।

मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ।

- इत्युक्तेश्च ।

अथ त्र्यहाद्यल्पशावाद्याशौचमध्ये सजातीयं विजातीयं दीर्घ-कालमुत्तरमाशौचं प्राप्तं तदोत्तरमाशौचं पूर्णं कार्यं न पूर्वेण शुद्धिः।

स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि ।
न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यति ।।

- इत्युशनसोक्तेः।

तेन त्र्यहादिशावमद्ये दशाहादिसूतकेन पूर्वेण शुद्धिः। शावाशौच-काले तु शावनिमित्तमस्पृश्यत्वं भवत्येव ।

गुरुणा [1] लघु शुध्येत लघुना [2] नैव तद्गुरुः । - इत्युक्तेः।

गुरुणा बहुकालाशौचेन लघु स्वल्पकालाशौचं शुध्येदित्यर्थः।

स्वभावबहुसूतिस्तु न्यूनशावविशोधनी ।
बहुसंख्यादिनं यत्तु तत्स्वभावबहूच्यते ।।

लघुना त्र्यहादिलघुकालाशौचेन । गुरु दशाहाद्याशौचं न शुध्येत् इत्यर्थः।

क्वचित्तु पूर्वशेषे शुद्धेरपवादमाह ।

शातातपः -

रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात् । - इति ।

---

१. गुरुणा दशाहाशौचेन ।

२. लघुना त्र्यहाद्याशौचेन ।

रात्रिशेषस्तु दशमरात्रं त्रिभागं कृत्वा यस्तृतीयो भागः स ज्ञेयः। तत्र पूर्वभागद्वये आशौचान्तरप्राप्तौ पूर्वाशौचे न उत्तराशौचशुद्धिः। तृतीयभागमध्येऽपि। चतुर्थयामात्पूर्वभागे द्व्यहाच्छुद्धिः। चतुर्थयामे तु त्र्यहाच्छुद्धिरिति भावः। इदं तु शावान्ते शावस्य सूतकस्य वा पाते सूतकान्ते च तुल्यम् ।

रात्रिशेषे त्रिरात्रिपक्षिण्याद्याशौचप्राप्तौ तु पूर्वाशौचेनैव शुद्धिः। रात्रिशेषे द्विरात्रत्रिरात्रवृद्धेः दशाहविषयत्वात् । रात्रिशेषे द्व्यहात् शुद्धिरित्यादौ दशाहाशौचप्रकरणात्। अपवादाभावे उत्सर्ग प्रवृत्त्या शेषतः शुद्धेरेव प्राप्तत्वात् । पूर्वाशौचान्तर्धितद्वित्रिदिना-शौचमध्ये दशाहाद्याधिकाशौचपाते तु वर्धितद्वित्र्याहाद्याशौचस्य अल्पत्वाद्यधिकाशौचेनैव शुद्धिः। तस्य द्व्यहाद्याशौचस्य पूर्वशेषत्वं । अत्र रात्र्यशेषे शुद्ध्यपवादत्वेन नैमित्तिकत्वात् । अपवादाभावे उत्सर्गस्यैव प्राप्तेः।।

अथ अवान्तरविशेषाः कथ्यन्ते ।

तत्र शंखः -

मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता ।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ।।

- इति ।

अस्यार्थः। मातुराशौचमध्ये पितामृतश्चेन्मात्राशौचेन पित्राशौचं न गच्छति । संपूर्णपित्राशौचं पुत्रेण कार्यमेवेति पादत्रयार्थः। चतुर्थ-

पादस्य अयमर्थः। पित्राशौचमध्ये मातृमृतौ पित्राशौचान्ते पक्षिणीं अधिकां कुर्यादिति । अनेनैव न्यायेन सपिंडाद्याशौचेन मातापित्राशौचापगमो नास्त्येवेति ज्ञेयम् । एवं भर्तृपत्न्योः परस्परमपि । इयं तु पक्षिणी दशमदिनात्पूर्वं मातुर्मरणे ज्ञेया ।

आद्यश्राद्धमशुद्धोऽपि कुर्यादेकादशाहनि । - इति । दशमे दिवसे अर्धरात्रात्परतः तत्प्रभाते वा मातुर्मरणे पूर्वोक्तं द्व्यहं त्र्यहं वा सूतकं ज्ञेयम् । विशेषोक्तेः प्राबल्यात् ।

मातुः पत्या सह गमने तु न पक्षिणी ।

मृतं पतिमनुव्रज्य पत्नी चेदमनलं गता ।
न तत्र पक्षिणी कार्या पैतृकादेव शुद्ध्यति ।।
- इत्युक्तेः।

पुत्रोऽन्यो वाग्निदस्तस्यास्तावदेवाशुचिस्तयोः।
न च श्राद्धं च पिंडं च युगपत्तु समापयेत् ।।
आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति ।।
- इति प्राजापत्यस्मृतिः।

जननान्तर्दशाहस्य मध्ये स्यान्मरणं यदि ।
प्रेतदमुद्दिश्य कर्तव्यं पिंडदानं यथाविधि ।।
प्रारब्धे प्रेतपिंडे तु मध्ये वा जननं भवेत् ।
तथैवाशौचपिंडांस्तु शेषान् दद्याद्यथाविधि ।।
- इति शातातपः।

मातुः पक्षिणीमध्ये पितुरेकादशाहं कुर्यात् ।
आद्यश्राद्धमशुद्धोऽपि कुर्यादेकादशाहनि ।।
- इत्युक्तेः।

## ।। अथ अशौचापवादः।।

नाशौचं कीर्तितं सद्भिः पतिते च तथा मृते ।
- इत्युक्तेः।

प्रथमपादत्रये आशौचं ज्ञातिसूतकम् । मृतकं चेत्यर्थः। चतुर्थपादे तु ज्ञातीनामिति शेषः। पतितव्यतिरिक्तानां पित्रादीनां विषये तु सूतकाद्यस्त्येव ।

मातापित्रोर्गुरोश्चैव बटुर्निर्हरणादिकम् ।
कुर्यान्मातामहस्यापि व्रती न भ्रंश्यते क्वचित् ।।
- इत्युक्तेः।

पित्राद्यन्तकर्मकरणकाले ब्रह्मचारिणा सन्ध्यावन्दनाग्नि-कार्यादिकं कार्यमेव । 'न त्यजेत् सूतके कर्म ब्रह्मचारी स्वकं क्वचित् ' इति छन्दोगपरिशिष्टात् ।

ब्रह्मचारिणा दशदिनपर्यन्तं ज्ञात्यन्नं न भोक्तव्यम्। न च तैः सह संवासः कार्यः ।

बटुः पतति ज्ञात्यन्नं भुक्त्वा तस्मान्न भक्षयेत् ।
अन्यत्र भोजनं कुर्यान्न च तैः सह संवसेत् ।।
यदि कुर्याच्चरेत्कृच्छ्रं पुनःसंस्कारमर्हति ।।
- इति ब्राह्मोक्तेः।

तथा गृहस्थादीनां रोगदुर्भिक्षाद्युपद्रववतां नाशौचम् ।

सद्यःशौचं समाख्यातं दुर्भिक्षे वाऽप्युपद्रवे ।
तथाऽऽहवहतानां च विद्युता पार्थिवैर्द्विजैः ।।

- इति कौर्मोक्तेः।

दक्षिणोऽपि -

स्वस्थकाले त्विदं सर्वं सूतकं परिकीर्तितम् ।
आपद्गतस्य सर्वस्य सूतके न च सूतकम् ।।

- इति ।

पूर्वोक्तं दशाहशावादि । अन्नसत्रकर्तृणां अन्नदानादिव्रतिनां तन्नियतं सद्भृत्यानां यज्ञदीक्षितानां ऋत्विक्कर्म कुर्वतां स्वदेशभ्रष्टानां वेदपारायणकर्तृणां वैद्यानां रजकतक्षादीनां च स्वस्वकर्मकरणे नाशौचम् ।

तथा चौलोपनयनयज्ञविवाहश्राद्धपुरश्चरणादिजलतीर्थयात्रा-तुलापुरुषादिदानयुद्धदैवताप्रतिष्ठारथोत्सवेषु सत्रेष्वारब्धेषु प्राप्तमाशौचं तत्समाप्तिपर्यन्तं न भवति ।

व्रतयज्ञविवाहेषु श्राद्धे होमार्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ।।
प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ।।

- इति स्मृतिः।

वरणं वराणां अध्वर्याद्यृत्विजां ग्रहणम् । यज्ञे प्रारम्भकाल इत्यन्वयः । एवमुत्तरत्रापि पाकपरिक्रिया अन्नादिपचनारम्भः। यज्ञपरि-

समाप्तिस्तु अवभृथ स्नानेन बोध्या ।

स्नानं त्ववभृथो यावत्तावत्तस्य न सूतकम् ।

- इत्युक्तेः।

ऋत्विजां च मधुपर्कोत्तराशौचाभावः। आहिताग्नेः सायं-प्रातर्होमादौ स्नानेन शुद्धिः। 'सूतके मृतके श्रौते कर्मणि तत्कालं स्नात्वा शुद्धिमवाप्नुयादि'ति स्मृतेः। आनाहिताग्नेः सूतकादिप्राप्तौ परहस्तेन होमः कार्यः।

सूतके मृतके चैव अशक्तौ श्राद्धभोजने ।

प्रवासादि निमित्तेषु हावयेन्न तु हापयेत् ।।

- इति बृहस्पत्युक्तेः।

हावयेत् परहस्तेन होमं कारयेत् । न तु हापयेदित्यर्थः ।

देवतोद्देशेन द्रव्यत्यागमात्रं तु सूतकिभिरपि कार्यम् । अन्यस्य द्रव्यत्यागे स्वामित्वाभावात् ।

ऋग्वेदिनां तु द्वादशरात्रं अहोमेऽपि नाग्निविच्छेदः। तैः परहस्तेन होमो न कार्योऽपि वा ।

आपस्तम्बाद्यैः परहस्तेन कार्य एव ।

सुदर्शनभाष्ये -

त्रिरात्रहोमे स्मार्ताग्नेः लौकिकत्वोक्तेः । अग्नेरात्मारोपणे कृते तु पुनः संधानमेव कार्यम् । सूतके मृतके चैव वेदाध्ययनवैश्व-देवादिहोमातिथिपूजादेवादितर्पणबलिहरणानि न कार्याणि ।

पंचयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः ।

- इत्युक्तेः।

अन्नसंस्कारार्थं तु परहस्तेन वैश्वदेवः [१] कार्यः।

सूतके मृतके कुर्यात्प्राणायामत्रयं नरः ।
तथा मार्जनमन्त्रास्तु मनसोच्चार्य मार्जयेत् ।।
गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।
मार्जनं न तु वा कार्यमुपस्थानं न चैव हि ।। - इत्युक्तेः।
सर्वकालमुपासा तु सन्ध्ययोः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ।।

- इति विष्णुपुराणवाक्यम् ।

अन्यत्रेत्युक्तिस्तु संपूर्णसन्ध्यावन्दनपरा । विभ्रमो भूतादिनिमित्तका भ्रान्तिः। आतुरं ज्वराद्युपद्रवः । भीतिः राजकारणचोरादिभयम् । अन्यत्र तु -

अर्घ्यान्ता मानसी सन्ध्या अर्घ्यमात्रं समन्त्रकम् ।
नो मन्त्रविधिरुच्चार्यो नोपस्थानं न वै जपः ।।

- इत्यप्युक्तम् ।

क्वचित्तु अर्घ्यानन्तरं मनसा दशवारं गायत्रीस्मरणमप्युक्तं । ग्रहणे तु राहुस्पर्शानन्तरं यावन्मुक्तिस्तावत्पर्यन्तमेव जपहोमदानादावाशौचं नास्ति ।

सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिः यावनमुक्तिर्न दृश्यते ।।

- इति लिङ्गपुराणोक्तेः।

---

१. वैश्वदेव इति । वैष्णवानां अवैश्वदेवकान्नग्रहणस्य सर्वदा निषेधो अवगन्तव्यः ।

स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ।

- इति व्याघ्रोक्तेश्च ।

यदा भोजनारम्भानन्तरमाशौचं श्रूयते तदा कर्तव्यमाह शातातपः-

यदा भोजनकाले तु अशुचिर्भवति द्विजः।
भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुद्ध्यति ।।
भक्षयित्वा तु तं ग्रासमहोरात्रेण शुध्यति ।
अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुध्यति ।। - इति ।

अशुचिः शूद्रस्पर्शादिनेति केचित् । अविशेषात् सूतकादिनापीत्यन्ये ।।

प्रत्यहं अन्नदातृणां सूतकिनामपक्वशाकतण्डुलादिपरिग्रहे न अशौचम् ।

अन्नसत्रप्रवृत्तानामामान्नं नैव गर्हितम् ।
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु व्रती भवेत् ।।

- इत्यङ्गिरसोक्तेः।

उभाभ्यामपरिज्ञातं सूतकं नैव दोषकृत् ।
एकेनापि परिज्ञाते भोक्तुर्दोषमुपाह्वयेत् ।।

उभाभ्यां असूतिसूतिकाभ्यां भोक्तुः सूतिकाग्रहे भोक्तुराशौचं आयातीत्यर्थः।

विवाहोत्सवयज्ञेषु त्वन्तरामृतसूतके ।
परैरन्नं प्रदातव्यं भोक्ता त्वस्य न दोषभाक्[1]।।

---

१. दोषभागिति परान्नग्रहणाददोषभाक् न भवतीत्यर्थः।

पूर्वसंकल्पितान्नेषु न दोषः परिकीर्तितः ।।

पूर्वसंकल्पितान्नेषु सूतकप्राप्ते इति शेषः ।

त्रिरात्रादिकमाशौचं येनातिक्रान्तकालिकम् ।
क्रियते तत्पदार्थस्य नाशौचं विद्यते क्वचित् ।।
पुस्तकादौ तु संस्पृष्टे प्रोक्षणाच्छुद्धिरिष्यते ।।

- इति विष्णुस्मृतौ ।

आदिशब्दात्तु यस्य पदार्थस्य प्रक्षालने नाशः तत्कशिपूपबर्हणादिकं गृह्यते ।।

## ।। अथ अपमृत्युमरणे विशेषः।।

कौर्मे -

व्यापादयेद्यदात्मानं स्वयमप्युदकादिभिः।
विहितं तस्य नाशौचं नापि कार्योदकक्रिया ।।

- इति ।

व्यापादयेत् घातयेत् । आदिपदाद्विषोत्थं धनादि गृह्यते । स्वयं इत्युक्तेः । बुद्धिपूर्वकमात्माघातिनां दाहमात्रं कृत्वा अशौचमन्त्य-कर्मादिकं च न कार्यमित्युक्तं भवति ।

शस्त्राग्निगरदाश्चैव पाषण्डाः क्रूरबुद्धयः ।
क्रोधात्पापं विषं वह्निशस्त्रमुद्बन्धनं जलम् ।।
गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः ।
महापातकिनो ये च पतितास्ते प्रकीर्तिताः ।।

पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसंचयः ।
न चाश्रुपातः पिंडो वा कार्यं श्राद्धादिकं क्वचित् ।।
तेषामपि तथा गङ्गातोये संस्थापनं हितम् ।।
इदं त्वनाहिताग्नेः । आहिताग्नेस्तु लौकिकाग्नौ दाहमात्रम् ।

प्रमादात् दुर्मरणे आशौचादि सर्वं भवत्येवेत्यङ्गिरा आह -
प्रमादादपि निःशंकस्त्वकस्माद्विधिचोदितः ।
शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः ।।
चण्डालैरथवा चोरैर्निहतो वापि कुत्रचित् ।
तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया ।।
- इति ।
व्यालः सर्पः। सर्पेण निहते नागबलिः कार्यः। शृङ्ग्यादिभिर्निहते तु नारायणबलिः कार्यः। यथाशक्ति सुवर्णवस्त्रादिदानं ब्राह्मणभोजनं च कार्यम् ।
बुद्धिपूर्वमात्मघातिनां संवत्सरान्ते सर्वमौर्ध्वदैहिकं कुर्यात् ।
बुद्धिपूर्वं मृतानां च पतितानां तथैव च ।
ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवोर्ध्वदैहिकम् ।।
- इत्युक्तम् ।
बुद्धिपूर्वप्रयागमरणे तु तत्काल एव सर्वमाशौचादिकं कार्यमेव ।
गङ्गायां तु समासाद्य यस्तु प्राणान् परित्यजेत् ।
ईप्सितांल्लभते कामान् वदन्ति मुनिपुङ्गवाः ।।
इति विहितमरणत्वात् ।

यतिमरणे तु दाहाशौचाद्यभावः।

त्रयाणा [१]माश्रमाणां च कुर्याद्दाहादिकाः क्रियाः।
यतेः किंचिन्न कर्तव्यं न चान्येषां करोति सः।।

- इति ब्राह्मोक्तेः।

स यतिः। अन्येषां पित्रादीनां दाहादिका इत्यनुवर्तते । इदं परमहंसविषयम् ।

एकदण्डहंसादित्रिदंडिनां तूशनसा विशेष उक्तः -

एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा ।
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ।।
सपिंडीकरणं तेषां न कर्तव्यं सुतादिभिः ।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ।।

- इति ।

परमहंसपुत्रेण तु सन्न्यस्ते पितरि जीवति मृते वा प्रतिसांवत्सरिकदर्शादिश्राद्धं पितामहस्य कार्यम् ।

वृद्धौ पितरि सन्न्यस्ते ताते च पतिते सति ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः।।

- इति स्मृतेः।

वृद्धौ नान्दीस्राद्धे । वृद्ध इति पाठे तु पितरीत्यस्य विशेषणम् । उच्चारणं तु जनकस्य पितृपितामहप्रपितामहानामिति बोद्धव्यम् ।

---

१. त्रयाणां ब्रह्मचारिगृहस्थवानप्रस्थाश्रमाणाम् ।

पितरीत्यनुवृत्तेः। पुनस्तातग्रहणात् पतिते ताते सति जीवति सति इत्यर्थो बोध्यः। मृते तु नारायणबल्यादिकं कृत्वा पतितस्यापि श्राद्धं कार्यम् । एवं नान्दीश्राद्धे पितुः वार्धिक्येऽपि अन्वयानुपपत्त्या पितृजीवनत्वं ज्ञेयम् । सन्यस्ते पितरि तु सामान्योक्त्या जीवति मृते वा तज्जनकादीनामेव श्राद्धादिकम् । नतु सन्यस्तपितुः। 'यतेः किंचिन्न कर्तव्यं' इति सामान्योक्तेः ।

## ।। अथ प्रवासस्थमरणे किंचिदुच्यते।।

प्रवासे मृतस्यास्थ्यान्यानीय घृतेनाभ्यज्य मन्त्रेण दाहादिकं कुर्यात् । अस्थीनां अलाभे तु भविष्ये -

कुर्याद्दर्भमयं प्रेतं दर्भैस्त्रिशतषष्टिभिः।
पालाशाभिः समिद्भिर्वा संख्या चैव प्रकीर्तिता ।।
चत्वारिंशच्छिरःस्थाने ग्रीवायां च दशैव तु ।
बाह्वोश्चैव शतं दद्याद्विंशतिं च तथोरसि ।।
उदरे विंशतिं दद्यात्त्रिंशतं कटिदेशयोः।
ऊर्वोश्चैव शतं दद्यात्त्रिंशतं जानुजंघयोः।।
पादाङ्गुलीषु दश वै एषा वै प्रेतकल्पना ।।

- इति ।

अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना स्वयम् ।
वेष्टितव्यस्तथा नूत्नकृष्णसारस्य चर्मणा ।।
ऊर्णासूत्रेण बध्वा तु प्रलेप्तव्यो यवस्तथा ।
सुपिष्टैर्जलसंमिस्त्रैर्दग्धव्यश्च तथाग्निना ।।

असौ स्वर्गाय लोकाय स्वाहेत्युक्त्या स्वबान्धवैः।
एवं पर्णशतं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ।।
इति ब्राह्मोक्तेश्च । अस्य दाहादिकं पूर्ववत् ।।

अथ दूरं प्रवासं गतस्य वार्ताभावे कर्तव्यमाह वृद्धमनुः -
प्रोषितस्य तथा कालो गतश्चेद्द्वादशाब्दिकः।
प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत् ।।
- इति ।
गृह्यकारिकायां तु -
तस्य पूर्ववयस्थस्य विंशत्यब्दोर्ध्वतः क्रिया ।
ऊर्ध्वं पंचदशाब्दात्तु मध्यमे वयसि स्मृता ।।
द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्मृता ।
चान्द्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सुतैः।।
कुशैः प्रतिकृतिं दग्ध्वा कार्याऽऽशौचादिका क्रिया ।।
इत्युक्तम् ।
प्रवासमृतस्य तिथ्यज्ञाने तु विशेषः -
देशान्तरगतो नष्टस्तिथिर्न ज्ञायते यदि ।
कृष्णाष्टमी ह्यमावास्या कृष्णा वैकादशी च या ।।
उदकं [१] पिंडदानं च तत्र श्राद्धं च कारयेत् ।।
एकादशी दशमीविद्धेति शेषः। इदं तु मासज्ञाने ।

---

१. उदकं अंजलिदानादि ।

दिनमेव न जानाति मासं नैव तु यो नरः ।
मार्गशीर्षेऽथवा भाद्रे माघे वा तद्दिनं भवेत् ।।

कालादर्शे -

मासाज्ञाने दिनाज्ञाने कार्यमाषाढमाघयोः ।
कर्तृभिन्नसपिंडानां पालाशविधिना चरेत् ।।

करणस्थले विद्यमानानां पालाशशरदाहदिनमारभ्य त्रिरात्रम् ।
तदाहांगिराः -

देशान्तरमृतं श्रुत्वा आशौचमकृतं यदि ।
कालात्यये [1]ऽपि कुर्वीत दाहकाले दिनत्रयम् ।।

- इति ।

स्मृत्यर्थसारे तु गृहीतशौचानां स्नानमात्रमुक्तम् । अथ मृतदिने प्रतिबन्धकेन संस्काराकरणे तु अन्तर्दशाहमध्ये दाहादिसंस्कारारम्भे तत्रैव सर्वं समापयेत् । दशाहोर्ध्वं तु आहिताग्नेर्दाहादि सर्वमाशौचं कुर्यात् । अनाहिताग्नौ तु पूर्वमगृहीताशौचयोः पत्नीपुत्रयोः कर्माङ्गं त्रिरात्रम् ।

## ।। अथ पतितानां घटस्फोटविधिः ।।

ब्रह्महत्यादिपातकैः म्लेंच्छाद्यन्नाशनैः ये पतिताः प्रायश्चित्तापेक्षारहिताः तेषां जीवतामपि घटस्फोटं कृत्वा अन्त्यकर्माशौचं च कार्यम् । तत्प्रकारस्तु -

---

१. कालात्यये गतेऽपि काले ।

पतितबान्धवैः पतितपुत्रं वा गुणहीनं तद्बन्धुं वा पुरस्कृत्य शूद्रादिगृहस्थजीर्णघटं शूद्रदासीदासादिना जलेनापूर्य निन्दित-चतुर्थ्यादिदिनवारादौ सायंकालमुखे सर्वैः स्नात्वा छिन्नाग्रान् दर्भान् भूमावास्तीर्य, जलपूरितघटं च दर्भेषु संस्थाप्य, मुक्तशिखाग्रं यथा प्राचीनावीतिनः विद्यासम्बन्धिनः ज्ञात्यादिबान्धवाश्च घटस्फोट-कर्तारमुपस्पृश्य दक्षिणामुखाः तेन दक्षिणाभिमुखेन पुत्रादिना वामपादेन एवं पतितनामगोत्रे गृहीत्वा 'श्राद्धावपात्रं कुर्म' इत्युक्त्वा तत्स्फोटयेयुः [१]।

ततः अहोरात्रमाशौचं कृत्वा द्वितीयदिने दशाहतिलोदक-पिंडदानानि कारयित्वा एकादशाहश्राद्धं कारयेयुः।
तदुक्तं मनुना -

पतितस्योदकं कार्यं सपिंडैर्ब्राह्मणैः सह ।
निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ।।
दासीघटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा।
अहोरात्रमुपासीत आशौचं बान्धवः सह ।।

- इति ।

वसिष्ठोऽपि -

'दासोऽसवर्णपुत्रो बन्धुसदृशो वा गुणहीनः सव्येन पादेन

---

१. स्फोटयेयुः। ज्ञात्यादिबान्धवाः घटस्फोटनं कुर्युः । घटस्फोटनिश्चयोत्तरं घटस्फोट-दिनात् प्राक् पतितज्ञातिनः धर्मकार्येषु अनधिकारः इति कश्चन ।

प्रवृत्ताग्रान्दर्भाल्लोहितान्वा उपस्तीर्य अपां पूर्णपात्रं अस्मै निनयेत् । निनेतारं चास्य प्रकीर्णकेशा ज्ञातयोऽन्वालभेरन्नअपसव्यं कृत्वे'ति । प्रवृत्ताग्राः छिन्नाग्राः । घटस्फोटाभावे पतितज्ञात्यादिबान्धवानां धर्माधिकाराभावादवश्यं घटस्फोटाशौचादिकं कार्यम् ।।

इति श्रीमन्नरसिंहाचार्यैः कृत स्मृत्यर्थसागरे ।
स्यादाशौचतरङ्गोऽयं श्रीमध्वपतितुष्टिदः [1]।।

इति श्रीछलारिनरसिंहाचार्यकृते स्मृत्यर्थसागरे
।। आशौचतरङ्गः समाप्तः ।।
।। श्रीकृष्णार्पणमस्तु ।।

****

**

---

१. श्रीमध्वपतितुष्टिदः श्रीमदानन्दतीर्थान्तर्गतभगवान्नारायणः तत्तुष्टिदः प्रियकारकः ।
।। इति आशौचतरङ्गः समाप्तः ।। श्रीकृष्णार्पणमसतु ।।

## छलारिनरसिंहाचार्यकृतस्मृत्यर्थसागरे

# ।। अथ आह्निकतरंगः।।

।।ओं।। अथ सदाचारस्मृत्यनुसारेणाह्निकमुच्यते । प्रत्यहं [१] रात्रौ पश्चिमभागे षट्घटिका [२] कालात्मके ब्राह्मे [३] मुहूर्ते उद्बुध्य नारायणादिनामस्मरणं कृत्वा शयनादुत्थाय क्ष्म्यग्भूमिं प्रार्थयेत् । तत्र मन्त्रः -

समुद्रवसने देवि पर्वतस्तनमण्डिते ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ।
विष्ठा मूत्रकफोत्सर्गमपराधं [४] क्षमस्व मे ।। - इति ।

ततः -

प्रातःकालादिकं कर्म नित्यनैमित्तिकं तथा ।
ईश्वराराधनार्थाय करिष्येऽहं तवाज्ञया ।।

इति विष्णुं प्रार्थ्य ।

---

।। अथ आह्निकतरंगः।।

१. प्रत्यहं प्रतिदिनम् ।

३. ब्राह्मे इति । तथाच मनुः -

ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ।। -इति ।

२. षड्घटिकेति । 'प्रहरद्वयं शयानो हि ब्रह्मभूयाय कल्पते' इत्यभिप्रायेण उक्तम् ।

४. अपराधं पादस्पर्शादि ।

नमोऽस्तु तात्त्विका देवा विष्णुभक्तिपरायणाः।
धर्ममार्गे प्रेरयन्तु भवन्तः सर्व एव हि ।।
इति देवान् प्रार्थयेत् ।

ततो ग्रामाद्बहिर्गत्वा मूत्रपुरीषोत्सर्जनं कुर्यात् । तत्रायं क्रमः। ग्रामाद्बहिः निऋतिभागे पश्चिमभागे शुद्धभूमौ कपालास्थि-भस्मादिरहितायां तृणशुष्कपत्रैः भूमिमाच्छाद्य यज्ञोपवीतं कटाव-लम्बितं पृष्ठतः कर्णे प्रस्थाप्य जलपूर्णपात्रं दूरतः स्थाप्य वस्त्रेण शिरः घ्राणं च प्रच्छाद्य निर्जने मौनेन ऊर्ध्वाधोभागं तिर्यक्भागं चानवलोकयन् मलमूत्रे विसर्जयेत् । दिवा चेदुत्तराभिमुखः रात्रौ तु दक्षिणाभिमुखः । सन्ध्याकाले पश्चिमाभिमुखः । शौचोदकपात्रं मूत्रपुरीषोत्सर्जनकाले हस्तेन धृतं चेत् तत्पात्रोदकं मूत्रसमम् ।

गृहीतोदकपात्रं यः कुर्यान्मूत्रपुरीषके।
तत्तोयं मूत्रतुल्यं स्यात् द्विजश्चान्द्रायणं चरेत्[१]।।
- इत्युक्तेः ।

यज्ञोपवीतं तदा कण्ठावलम्बितं चेत्तदपवित्रं । त्यक्त्वा पुनर्नूतन-यज्ञोपवीतं धार्यम् । तदा पाणिं शिरसि न स्थापयेत् । देवालये यज्ञस्थले स्मशानेऽग्नौ उदके च तटाकसमुद्रनदीतीरेषु अश्वत्थादि-द्रुमच्छायायां अग्निगोब्राह्मणसूर्यसोमोदकाभिमुखं च न कुर्यात् । स्वविष्ठां न पश्येत् । दृष्टा चेत् सूर्यगोब्राह्मणादिकं पश्येत् । तथा

---

१. चान्द्रायणं चरेदिति । तद्गृहीत इति शेषः।

व्रीह्यादितुषांगारादिमार्गे सस्यस्थाने नखलोमकीटलताच्छादितस्थले क्षेत्रेषु विण्मूत्रे नोत्सर्जेत् ।

स्नानं कृत्वार्द्रवासस्तु विण्मूत्रे कुरुते यदि ।
प्राणायामत्रयं कृत्वा पुनः स्नानेन शुद्ध्यति ।।

इत्यत्र मुख्यस्नानाशक्तस्य पुनः स्नानशब्देन मन्त्रस्नानं ग्राह्यं । मन्त्रस्नानविधिश्चोत्तरत्र वक्ष्यते ।

संझाटनात् सप्तवारं शुष्कस्त्वार्द्रः पटो भवेत् ।
- इति हारीतस्मृतेः।

झाटनशब्देन हस्ताभ्यां वस्त्रसंचालनमुच्यते ।। इति मूत्रपुरीषोत्सर्जनम् ।।

## ।। अथ शौचम् ।।

मृल्लोष्टेन गुदं संशोध्य गुहीतशिस्नश्चोत्थाय जलपात्रस्थलं गत्वा पात्रस्थोदकेन मृदा शौचं कुर्यात् । नतु नद्यादौ ।

नदीसरित्तटाकेषु वापीकूपह्रदेषु च ।
कुल्यायां देवखातेषु द्विजः शौचं विवर्जयेत् ।।
- इति ऋष्यशृङ्गोक्तेः।

अंगारतुषकीटास्थिशर्कराशकलान्विताम् ।
वल्मीकमूषकोत्खातां स्मशानस्थां च मार्गगाम् ।
अन्यशौचावशिष्टां च ह्याददीत न मृत्तिकाम् ।।
एका लिङ्गे करे तिस्र उभयोर्मृद्द्वयं स्मृतम् ।

पादयोरेकवारं तु मूत्रशौचमिदं स्मृतम् [१] ।।
विण्मूत्रोत्सर्जने चांघ्रिं दक्षिणं क्षालयेत्ततः ।
वामपादं ततोऽन्यत्र वामपादौ [२] ततः परम् ।।

अन्यत्र बहिरागमानादिनिमित्ते । परं दक्षिणपादम् ।

अङ्गुष्ठपर्वमात्रा स्याल्लिङ्गशौचे तु मृत्तिका ।। - इति ।

गुदशौचे तु संख्यानियममाह यमः -

द्वेलिङ्गे मृत्तिके देये गुदे पंच करे दश ।
उभयोः सप्त दातव्याः तिस्रस्तिस्रस्तु पादयोः ।।

- इति मोहने ।

मृत्प्रमाणमाह वसिष्ठः -

अर्धप्रसृतिमात्रैस्तु मृद्भिरभ्युच्छ्रितैर्जलैः।
गन्धलेपक्षयकरं शौचं कुर्याद्यथाविधि ।।
द्वितीयादिस्तदर्धार्धा ज्ञेया शौचे तु मृत्तिका ।।

- इति।

मृदा शौचं सगुल्फान्तमाजानु स्याज्जलेन तु ।
मृदा [३] त्वामणिबन्धं स्याज्जलेनाकूर्परं तथा ।।
मूत्रात्तु द्विगुणं प्रोक्ता रेतोत्सर्गे तु मृत्तिका ।
गृहस्थानामिदं प्रोक्तं द्विगुणं ब्रह्मचारिणाम् ।

---

१. 'गुदं सांडं च धावयेदि'ति वा पाठः ।

२. वामपादौ इति बहुषु पुस्तकेषु पाठः । परं चैकस्मिन् वामपादमिति । स एव युक्त इति भाति । आदौ वामपादं प्रक्षाल्य ततोऽनन्तरं परं दक्षिणं क्षालयेत् ।

३. मृदेति । मृत्तिकया गुल्फपर्यन्तं प्रलिप्य जानुपर्यन्तं जलेन क्षालयेत् ।

त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम् ।।
रात्रावर्धं चरेच्छौचमापद्यपि तथैव च ।
तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि ।।
स्वग्रामे पूर्ण आचारश्चान्यग्रामे तदर्धकम् ।
पट्टणे पादमाचारः[१] पथि शूद्रवदाचरेत् ।।
गन्धक्षयकरः शौचः स्त्रीशूद्राणां विधिः स्मृतः।
न्यूनाधिकं न कर्तव्यं शौचशुद्धिमभीप्सता ।।
प्रायश्चित्तेन युज्येत विहितातिक्रमेण स ।।

- इति दक्षस्मृतिः।

ताम्रादिपात्रे विण्मूत्रसम्बन्धे गन्धक्षयपर्यन्तं मृज्जलाभ्यां संशोध्य आम्लभस्मादिभिः संशोधयेत् । मृद्भाडं तु त्याज्यमेव ।

विप्रस्य भुंजतश्चेत्स्यात्स्रवणं मलमूत्रयोः ।
भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुध्यति ।।
भक्षयित्वा तु तं ग्रासमहोरात्रेण शुध्यति ।।

- इत्यांङ्गिरसस्मृतिः ।

## ।। अथ गंडूषाः ।।

चत्वारोऽष्टौ च गण्डूषाः क्रमान्मूत्रपुरीषयोः ।
भोजने द्वादशैव स्यू रेतोत्सर्गे तु षोडश ।
बहिरागमनादौ तु चत्वारः शुद्धिदाः स्मृताः ।।

---

१. पादं चतुर्थांशः ।

ब्रह्मचर्यादीनां तु मृत्तिकाशौचोक्तन्यायेन द्विगुणत्वादिकं ज्ञेयम् । स्त्रीणामप्येवमेव । विधवानां तु यतिवद्दंडूषा:[१] परिकीर्तिता:।

मेध्यामेध्येन्द्रियाण्याह मनुः -

ऊर्ध्वं नाभेरिन्द्रियाणि मेध्यान्युक्तानि सर्वशः।
तदधस्तात्त्वमेध्यानि कीर्तितानि न संशयः ।। - इति।
केशशुक्लमसृङ्मज्जामूत्रविट्कर्णविण्नखान् ।
श्लेष्माश्रुदूषिकास्वेदान् परस्य यदि संस्पृशेत् ।।
प्रक्षाल्य मृज्जलाभ्यां तदङ्गं स्नात्वाऽऽचमेद् द्विजः ।
तान्येव स्वानि संस्पृश्य पूतः स्यात्परिमार्जनात् ।।
- इति ।

शुक्लं रेतः असृक् रक्तं । मज्जा शरीरस्य धातुविशेषः। विट् विष्ठा । कर्णविट् कर्णान्तरस्थलम् । अस्त्रु नेत्रोदकम् । दूषिका नेत्रमलम् ।

## ।। अथाचमनम् ।।

शुचौ देशे उपविश्यैव उभयजान्वन्तरहस्तयुग्मः सपवित्रः बद्धशिखः ब्रह्मसूत्रवान् प्राङ्मुख उदन्मुखो वा बुद्बुदफेनरहितेन शोधितेन शुद्धेन शीतलजलेन द्विजः ब्राह्मेण तीर्थेन आचमेत्[२]।

---

१. यतिवद्दन्डूषा इति । यतिना यथा कार्याः तथा ।

२. आचमनाकरणे दोषः पुराणे अभिहितः -

य: क्रियां कुरुते मोहात् अनाचम्यैव नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियाः सर्वाः न संशयः ।। -इति ।

मार्कण्डेयः -

सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं विवर्जयेत् ।।
पवित्रग्रन्थिर्नाचामेन्न दूर्वाभिः कदाचन ।
नाकाशेन च शून्यः सन् कुशपाणिरुपस्पृशेत् ।।
अङ्गुष्ठमूलं ब्राह्मं स्यात्प्राजापत्यं कनिष्ठगम् ।
पैतृकं तर्जनीमूलं कराग्रं दैवतं स्मृतम् ।।
आग्नेयं करमध्यं स्यात्तीर्थान्येवं द्विजस्य हि ।
तर्पणं देवतादिभ्यो देवतीर्थादिभिः स्मृतम् ।।

- इति ।

शून्यः पवित्ररहितः। आदिपदाभ्यां [१] ऋषितर्पणं कनिष्ठमूलस्थ-प्राजापत्येन तीर्थेन । पितृतर्पणं तु तर्जन्यंगुष्ठमध्यस्थपितृतीर्थेनेति ग्राह्यम् ।

भरद्वाजः -

पिबेदाचमने वारि वीक्षितं ब्रह्मतीर्थतः।
प्राजापत्येन होतव्यं पैत्रेण पितृतर्पणम् ।।
कराग्रेण प्रधानं स्यान्मध्यमेन प्रतिग्रहः ।। - इति ।

व्याघ्रः -

गात्रस्थानान्याचमने स्पृष्ट्वा स्पृष्ट्वा जलं स्पृशेत् ।।

- इति ।

प्रत्येकमुदकस्पर्शं कुर्यादाचमने बुधः ।।

- इति दक्षोक्तेः।

एकदैवोदकं गृहीत्वा सर्वाङ्गानामुदकस्पर्शनं वा ।

व्यासः -

गोकर्णाकृतिहस्तेन माषमग्नं जलं पिबेत् ।
तन्न्यूमधिकं पीत्वा सुरापानी भवेद् द्विजः ।।

गोकर्णकरणप्रकारमाह ।

व्यास एव -

संहितांगुलिना तोयं गृहीत्वा पाणिना द्विजः ।
मुक्तांगुष्ठकनिष्ठेन गोकर्णं तं विदुर्बुधाः ।। - इति ।

संवर्तः -

शिरः प्रावृत्य कण्ठं वा तिष्ठन्मुक्तशिखोऽपि वा ।
अकृत्वा पादयोः शौचमाचम्याप्यशुचिर्भवेत् ।। - इति ।

तिष्ठन्नित्यस्यापवादः स्मृत्यन्तरे -

जानुमात्रे जले तिष्ठन्नासीनः प्राङ्मुखः स्थले ।
तर्पणाचमने कुर्याज्जपं चापि यथाविधि ।।

तत्र विशेषमाह पैठीनसिः -

पादमेकं जलस्यान्तर्द्वितीयं बहिरेव च ।
कृत्वाचमेत् द्विजश्चार्द्रवासा वा शुष्कवस्त्रकः ।।
आर्द्रवासा जले कुर्यात्तर्पणाचमने जपम् ।
शुष्कवासाः स्थले कुर्यात्तर्पणाचमने जपम् ।। - इति ।
जानुमात्रे तदूर्ध्वं वा जले तिष्ठन्नुपस्पृशेत् ।।

आचमेदित्यर्थः ।

अग्नितप्तं च दुर्गन्धं तथा बुद्बुदकेनयुक् ।

एलादिवासितं क्षारं जलं शौचावशेषितम् ।।
च्छन्नं पर्युषितं स्पृष्टं त्यजेच्च कृमिसंयुतम् ।
देवाभिषिक्तशेषं च त्यजेदाचमने जलम् ।।
तिष्ठन् मेहंश्च संजल्पन् शृण्वन् दुर्जनभाषणम् ।
अन्यं स्पृशन् दिशं पश्यन् पश्यन् दुष्टपदार्थकम् ।।
शयानः पादुकस्थश्च बहिर्जानुकरोऽपि च ।
कंचुक्याच्छादितशिराः सोपानत्को नचाचमेत् ।।
एकहस्तेन नाचामेन्मुक्तकेशो जलाप्लुतः ।
सदा यज्ञोपवीती स्यात्तथा बद्धशिखः सदा ।।
तद्धीनो यद् द्विजः कुर्यात्तत्सर्वं निष्फलं भवेत् । - इति ।
स्वोपविष्टस्थले कृमिपिपीलिकादिपीडाव्यावृत्त्यर्थं स्वपरितः स्थापित जलेनावृतः।

तथा हारीतः -

पवित्रपाणिराचामेत्प्रकृतिस्थेन वारिणा ।
त्रिः प्राश्यांगुष्ठमूलेन द्विरुन्मृज्य कपोलकौ ।।
मध्यमांगुलिभिः पश्चात् द्विरोष्ठं समृजेत्सदा ।
नासिकोष्ठान्तरं पश्चात्सर्वांगुलिभिरेव च ।।
पादौ हस्तौ शिरश्चैव जलैः संमार्जयेत्ततः ।
अंगुष्ठतर्जनीभ्यां तु संस्पृशेन्नासिकापुटौ ।।
अंगुष्ठानामिकाभ्यां तु चक्षुःश्रोत्रे जलैः स्पृशेत् ।
कनिष्ठांगुष्टकैर्नाभिं जलेन हृदयं ततः ।।

सर्वांगुलीभिः शिरसि बाहुमूले तथैव च ।
नामभिः केशवाद्यैश्च यथासंख्यमुपस्पृशेत् ।। - इति ।

पवित्रपाणिः कुशपवित्रपाणिः। सुवर्णपवित्रपाणिर्वा ।
तल्लक्षणं -

अनन्तस्तरणौ यौ तो कुशौ प्रादेशसंयुतौ ।
अनखच्छेदितौ साग्रौ तौ पवित्राभिधायकौ ।।
- इति ।

कुशमध्यस्थगर्भपवित्रं निष्कास्य एतादृशं कुशपवित्रं द्वयमेव पवित्रमित्यर्थः।

सुवर्णस्य सुवर्णस्य सुवर्णस्यांगुलीयकम् ।
पवित्रमिति विज्ञेयं सर्वकर्मसु पूजितम् ।। - इति ।

सुवर्णस्य शोभनवर्णस्य पंचगुंजात्मकैर्माषैः षोडशभिः परिमितस्य सुवर्णस्य कांचनस्य अंगुलीयकं मुद्रिकापवित्रमित्यर्थः।

अन्यानि तु पवित्राणि कुशदूर्वात्मकान्यपि ।
हेमात्मकपवित्रस्य कलां नार्हन्ति षोडशीम् ।।
एकोऽनामिकया धार्यो दर्भस्तु द्विजसत्तमैः ।
द्वाभ्यामनामिकाभ्यां वा धार्ये दर्भपवित्रके ।।
एवं हेमपवित्रं च धार्यं विप्रादिभिर्बुधैः ।।
- इति ।

प्रकृतिस्थेन वारिणा समीचीनोदकेन । तत्प्रकारः त्रिरिति । त्रिः त्रिवारं अंगुष्ठमूलेन ब्राह्मेण तीर्थेन उदकमिति शेषः। त्रिभिः केशवादिनामिभिः प्राश्य पीत्वा गोविन्दविष्णुनामाभ्यां करौ

प्रक्षाल्येति शेषः । कपोलकौ गण्डस्थलद्वयं अंगुष्ठमूलभागेन मधुसूदनत्रिविक्रमेति नामद्वयेन द्विः द्विवारं उन्मृज्य प्रक्षाल्य । ओष्ठं ओष्ठद्वयं वामननाम्ना मध्यांगुलिभिः मध्यमांगुलित्रयेण । तथा नासिकोष्ठमध्यभागं सर्वांगुलिभिः श्रीधरेति नाम्ना संमृजेदित्यन्वयः। ततः हृषीकेशनाम्ना हस्तौ पद्मनाभेति नाम्ना पादौ । दामोदरेति नाम्ना शिरः संमार्जयेत् । सर्वांगुलिभिरित्यस्याप्यत्रान्वयः। चैवेति च शब्दात् संकर्षणेति नाम्ना नासिकाधोभागं मुष्टिपृष्ठभागेन संमृजेदिति ज्ञेयम् । नासिकापुटौ नासिकादक्षिणवामभागौ अंगुष्ठ-तर्जनीभ्यां स्थूलांगुलिसमीपस्थांगुलिभ्यां वासुदेवप्रद्युम्नेति नामभ्यां जलैः तथा चक्षुर्द्वये अंगुष्ठानामिकाभ्यां अनिरुद्धपुरुषोत्तमनामभ्यां तथा कर्णद्वयमेताभ्यामेव अंगुलिभ्यां अधोक्षजनारसिंहेति नामभ्यां स्पृशेत् । अनामिका तु कनिष्ठांगुलिसमीपस्थांगुलिः । नाभौ अच्युतेति नाम्ना। कनिष्ठांगुष्ठकैरिति बहुवचनेन अनामिका गृह्यते । हृदयं तलेन करतलेन जनार्दनेति नाम्ना । ततः सर्वाङ्गुलिभिः शिरसि उपेन्द्रनाम्ना तथा बाहुमूले बाहोरूर्ध्वभागद्वयं हरिकृष्णेति नामभ्यां सर्वांगुलिभिः संस्पृशेदिति स्मृतिवाक्याभिप्रायः।

जपे स्मशानगमने परिधाने च वाससः ।
स्नाने पाने क्षुते स्वापे होमभोजनकर्मसु ।।
रथ्योपसर्पणे मूत्रविष्ठास्पृष्टौ द्विराचमेत् ।।
- इति भरद्वाजस्मृतिः।

दाने प्रतिग्रहे होमे जपे सन्ध्यात्रये तथा ।

बलिकर्मणि चाऽचामेदादौ द्वौ सकृदन्ततः।।

- इति पाद्मे ।

चांडालादीन् जपे होमे दृष्ट्वाऽऽचामेत्सकृत्सकृत् ।

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते ।।

पतितैः सह संवादे दक्षिणं श्रवणं स्पशेत् ।। - इति ।

निष्ठीवनं अधोवायुनिसर्गः।

पराशरः -

पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा ।

विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ।।

पंचांगुलीन्मेलयित्वा दक्षिणं श्रवणं स्पृशेत् ।।

गौणाचमनम् । तदभावे सलिलस्येति ।

देवलः -

भोजने दन्तलग्नानि निर्हृत्या [१]ऽचमनं चरेत् ।

दन्तलग्नमनिर्हार्यं तृणेन यदि दन्तवत् ।।

इति तृणेन यदि अनिर्हार्यं निष्कासयितुमशक्यं तर्हि दन्तलग्नमन्नादिकं दन्तवत् । नोच्छिष्टं एव । हस्तमुखलग्नघृतादिकं मृदादिसंशोधनेन न गतं नोच्छिष्टमिति भावः।

शातातपः -

दन्तलग्ने फले मूले भुक्तस्नेहानुलेपने ।

---

१. निर्हृत्य निःशेषेण तृणादिना अन्नं निष्कास्य ।

ताम्बूलभक्षणे चैव नोच्छिष्टो भवति द्विजः ।।
इक्षुदण्डे तिले सोमे नोच्छिष्टं मनुरब्रवीत् ।।

- इति यमः।

प्रत्यङ्मुखश्चेदाचामेत्पुनराचम्य शुध्यति ।
याम्यामुखश्चेदाचामेत्पुनः स्नानेन शुध्यति ।।
अरण्येऽनुदके देशे चोरव्याघ्रभयाकुले ।
कृत्वा मूत्रं पुरीषं वा द्रव्यहस्तो न दुष्यति ।।
याः क्रियाः कुरुते मोहादनाचम्य च नास्तिकः ।
भवन्ति व्यर्थास्तास्तस्य क्रियास्सर्वा न संशयः ।।
श्रौतस्मार्तेषु गार्हेषु क्रियमाणेषु वै बुधः ।
द्विराचमेच्च सर्वत्र विण्मूत्रोत्सर्जनत्रयम् ।।

- इति हारीतस्मृतिः।

द्विराचमेदाद्यन्तयोर्मिलित्वेति शेषः । त्रयमिति यथोक्तम् । गंडूषानन्तरमिति शेषः ।

आपत्काले तु संप्राप्ते शौचाचारं न चिन्तयेत् ।
शौचं समाचरेत्पश्चादिति वेदविदो विदुः ।। - इति ।

इत्याचमनप्रकरणम् ।।

## ।। अथ दन्तधावनमाचरेत् ।।

व्यासः -

प्रक्षाल्य पादौ हस्तौ च मुखं चाद्भिः समाहितः ।
दक्षिणं बाहुमुद्धृत्य सव्यं जान्वन्तरं ततः ।।

आचम्य प्राङ्मुखः पश्चाद्दन्तधावनमाचरेत् ।
प्रतिपत्पर्वषष्ठीषु नवम्यां द्वादशीदिने ।।
अष्टम्यां च चतुर्दश्यां संक्रान्त्यां च स्वजन्मसु ।
उपवासदिने प्राप्ते वैधृतौ चापराह्णके ।।
नद्यां देवालये गोष्ठे जलमध्ये शुचिस्थले ।
दक्षिणाभिमुखस्तिष्ठन् शयानश्च विदिङ्मुखः ।।
गच्छन् [१] प्रत्यङ्मुखः काष्ठैर्न कुर्याद्दन्तधावनम् ।
व्याघ्रकृष्णाजिने विप्रः कुशमध्ये तृणेषु च ।।
उपविश्य न कुर्वीत दन्तशुद्धिमनातुरः ।
गुर्वर्कशुक्रवारेषु कुजाहे व्रतवासरे ।
जन्मभे श्राद्धदिवसे दन्तकाष्ठं विवर्जयेत् ।।
जान्वन्तर्गतहस्तः सन् कुक्कुटासनसंस्थितः ।
तर्पमाचमनोल्लेख्यं दन्तधावनमाचरेत् [२] ।।
वर्जयेद्यत्त्वविज्ञातमार्द्रं शुष्कं च पाटितम् ।
क्वाथितं ग्रन्थिसंयुक्तं तथाश्वत्थपलाशकैः ।।

---

१. गच्छन् इति । गच्छन् प्रत्यङ्मुखश्च । उक्तं च स्मृत्यर्थसारे - 'प्राङ्मुख ईशानाभिमुखो वा दक्षिणबाहुमुद्धृत्य अन्तर्जानुकरमुपविश्य' इति ।

२. कषायकटुकसुगन्धिकण्टकीक्षीरवृक्षगुल्मलतादीनां एकेन प्रक्षालितेन वाग्यतो दन्तान्धावयेत् । तत्र -

वृक्षजकाष्ठं स्यादव्रणं मृदु कीटाग्र्यदूषितम् ।

द्वादशाङ्गुलमष्टाङ्गुलम् वा ।

कनिष्ठिकाग्रसमस्थूलं पर्वार्धकृतकूर्चकम् । - इत्यादि ।

कार्पासकुशकाशाश्च निर्गुंडी अर्कतालकान् ।
अंगारवालुकावस्त्रभस्मलोष्ठेष्टकाश्मकान् ।।
वर्जयेद्दन्तशुद्धौ तु नखैरङ्गुलिभिस्तथा ।
मुक्त्वा चानामिकांगुष्ठैर्वर्जयेद्दन्तधावनम् ।।
यस्तु गंडूषसमये तर्जन्या दन्तधावनम् ।
करोति यदि मूढात्मा नरकं पतति द्विज ।।

- इति व्यासस्मृतिः।

आम्रापामार्गबिल्वानां तिन्त्रणीकरवीरयोः।
वटार्कधात्रीजम्बीरक्षीरकण्टकिनामपि ।।
निम्बस्य कुटजस्यापि काष्ठेन दन्तशोधनम् ।
पालाशमध्यकाण्डेन यावन्नालशिरं विना ।।
तृणपर्णैस्सदा कुर्यादमामेकादशीं विना ।
तिथिस्तात्कालिकी ग्राह्या स्नाने वै दन्तधावने ।।

- इत्यांगिरसस्मृतिः।

गर्गस्तु दन्तकाष्ठानां फलमाह -

प्लक्षाच्चैवार्थसम्पत्तिर्बदर्या मधुरस्वरः ।
वटाद्दीप्तिर्धनं बिल्वादाम्लादारोग्यमेव च ।।
औदुम्बराद्वाक्यसिद्धिरपामार्गाद्धृतिः सुधीः ।
प्रजाशक्तिः पुष्टता च सौभाग्यमुपजायते ।।
अर्कात्तु रोगहीनः स्यादेतैर्दुःस्वप्ननाशनम् ।।

- इति ।

दन्तकाष्ठप्रमाणं तु विप्राणां द्वादशांगुलम् ।

क्षत्रविट्शूद्रजातीनां नवषट्चतुरंगुलम् ।।
चतुरंगुलमात्रं तु स्त्रीणां नास्त्यत्र संशयः ।।

दन्तकाष्ठाभिमन्त्रणमन्त्रमाह -

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनिच ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ।।
विनाभिमन्त्रणं विप्रो न कुर्याद्दन्तधावनम् ।।
ऋषिः प्रजापतिस्त्वस्य छन्दोऽनुष्टुप् बृहस्पतिः ।
देवतात्रितयं स्मृत्वा दन्तधावनमाचरेत् ।।
प्रक्षाल्य दन्तकाष्ठं तु शुचौ देशे ततस्त्यजेत् ।
विधवाबटुकन्यानां न काष्ठैर्दन्तधावनम् ।।

- इति ।

भरद्वाजः -

तृणपर्णैस्सदा कुर्यादमामेकादशीं विना । -इति ।

चूतपर्णेन कुर्यादित्यर्थः।

इति दन्तधावनप्रकरणम् ।।

ततस्त्रिराचम्य उषः काले गजेन्द्रमोक्षणादिस्तोत्राणि पठेत् । ततः किंचित्परमेश्वरध्यानं कुर्यात् ।

ब्राह्मे मुहूर्ते चोत्थाय वार्युपस्पृश्य माधवः ।
दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ।।

इति भागवते कृष्णस्य प्रातःकालाचरणोक्तेः ।

एवमेव श्रीमदाचार्यैरपि -

स्मृत्वा विष्णुं समुत्थाय कृतशौचो यथाविधि ।

धौतदन्तः समाचम्य .... ।। - इत्युक्तम् ।[१]

'स्मृत्वे'त्युक्तिबलात् पूर्वं बुद्ध्वा इति ग्राह्यम् । अत एव । उत्तरत्र 'समुत्थाये'ति संशब्दबलाच्छयनादुत्थायेति ग्राह्यम् । 'यथाविधी'-त्यस्य पूर्वत्र उत्तरत्र च सम्बन्धः। तथा च उद्बुध्य 'नारायणे'त्यादि-नामस्मरणं कृत्वा, शयनादुत्थाय यथावच्छौचं कृत्वा, आचम्य, यथाविधि दन्तदावनं कृत्वा, पश्चात् सम्यक् त्रिराचम्य [२], 'स्मृत्वे'-त्यस्य अत्रानुवृत्तेस्तस्य स्तोत्रपाठध्यानाद्यर्थकत्वात् । स्नानात्पूर्वं तत्कुर्यादित्यर्थः ।

## ।। अथ स्नानम् ।। [३]

स्मृत्वोंकारं च गायत्रीं बध्नीयात्तु शिखां द्विजः।

पुनराचम्य हृदयं बाहू स्कन्धौ च संस्पृशेत् ।।

---

१. श्रीमदानन्दतीर्थभगवत्पादैः सदाचारस्मृतौ । 'स्नानं कुर्याद्विधानतः' इति चतुर्थःपादः।

२. दन्तधावनं कृत्वा पश्चात्सम्यक् त्रिराचम्येति। 'संशोध्य दन्तानाचम्य विधिवत्स्नान-माचरेदि'ति स्मृत्यनुसारेणेदम् ।

३. अथ स्नानम् -

स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदिता नृणाम्। - इति योगयाज्ञवल्क्यः ।

अस्नातस्तु पुमान्नार्हो जप होमादिकर्मसु ।।

गुणा दशस्नानपरस्य पुंसो रूपं च तेजश्च बलं च शौर्यम् ।

आयुष्यमारोग्यमलोलुपत्वं दुःखप्रघातश्च तपश्च मेधा ।। - इति कूर्मपुराणे ।

परं च - 'स्नाने मनःप्रसादस्याद्देवा अभिमुखाः सुधीः ।

सौभाग्यश्रीः सुखं पुष्टिः .......।।' - इत्याद्युक्त्या पापनाशकत्वाद्युक्तम् ।

स्नानार्थं पात्रमादाय तुलसीमूलमृत्तिकाम् ।
शुद्धां वा मृदमादाय प्रगच्छेज्जलसन्निधिम् ।।
आचम्य कृतसंकल्पः प्रार्थयेन्मन्त्रकैर्नदीं ।।

तथा -

गण्डूषं पादविक्षेपं क्षालितं मलिनस्य च ।
उत्क्षेपक्षपणे देवि मत्कृतं क्षम पाहि मां ।।

इत्युक्त्वा विष्ण्वादिभ्योऽर्घ्यं दत्वा मलापकर्षस्नानं कुर्यात् ।

भुवि जानुनि चाऽस्थाप्य त्रिभागं कारयेन्मृदम् ।
मूलमन्त्रेण सम्प्रोक्ष्य गायत्र्या चाभिमन्त्रयेत् ।।
अंशमेकं त्रिधा कृत्वा एकांशेन कपोलकौ ।
गण्डौ कक्षौ द्वितीयेन सर्वांगं तु तृतीयतः ।।
संमार्जयेत् द्वितीयं च त्रिधा कृत्वा तथैकतः ।
सर्वांगं मार्जयेदंशान् द्वितीयेन कपोलकौ ।।
तृतीयेन शिरः पादौ वक्षः संमार्जयेत्ततः ।
तृतीयांशं गृहीत्वा तु सलिले स्नानमाचरेत् ।।
जले तेजोमयीमूर्तिस्तस्यां प्राणं द्रवात्मकम् ।
द्रवरूपं तत्र विष्णुं ध्यायेद्गङ्गादितीर्थके ।।
पादेन पाणिना नैव ह्यभिहन्याज्जलं द्विजः ।।

- इति ।

द्वादशाक्षरमन्त्रं च तथैवाष्टाक्षरं मुनिः ।
विष्णुमन्त्रं समुच्चार्य त्रिवारं तु निमज्जयेत् ।।
आपोहिष्ठेति सूक्तेन प्रोक्षयित्वा ततो मृदम् ।

ककुदि स्थापयित्वैव त्रिधा कृत्वा तथैकतः ।।
पुंड्राणि तु द्वितीयेन कक्षयोस्तु तृतीयतः ।
सर्वाङ्गं लेपयित्वा तु त्रिर्निमज्याघमर्षणम् ।।
सूक्तं त्रिवारं तु जपेन्निमज्यैव हरिं स्मरन् ।
स्त्रष्टारं सर्वलोकानां जले वै शेषशायिनम् ।।
प्रणवेन समुत्थाय देवर्षिपितृपूर्वकान् ।
यमं गुरूंश्च संस्मृत्य स्नात्वा पुरुषसूक्ततः ।।
सिंचयेच्छंखमुद्रेण स्वदेहस्थं हरिं स्मरन् ।
वासुदेवादिकं बिम्बं प्रवाहाभिमुखो जले ।।
नद्यां स्नायात्तटाकादौ सूर्यस्याभिमुखो दिवा ।
प्राङ्मुखोदङ्मुखो रात्रौ ततस्तीरं गतो द्विजः ।।
शिरस्याधाय निर्माल्यं शालग्रामजलेन तु ।
प्रोक्षयित्वा तु त्रिः पीत्वा तीर्थं शिरसि धारयेत् ।।
- इति ।

## ।। तीर्थमाहात्म्यप्रतिपादिका श्रुतिः ।।

'तदस्य प्रियमभिपाथो अश्यां नरो यत्र देवयवो मदन्ति । उरुक्रमस्य सहि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ।।'

अस्यार्थः। अस्य उरुक्रमस्य उरुः उत्कृष्टः क्रमः[१] पादविक्षेपः त्रिविक्रमरूपो यस्य तादृशस्य विष्णोः पदे स्थाने परमे उत्तमे

---

१. क्रमः पादविक्षेपः । 'क्रमु पादविक्षेपे' इति धातोः ।

शालग्रामचक्रांकितादिरूपे [१] अभिषिक्तम् [२] । उपसर्गाणां क्रियायाः असन्निधाने कर्तृकर्मादिसाधनसहितक्रियावाचकत्वात् । उत्सः भागीरथीगोदावर्यादिप्रस्रवणरूपम् । 'उत्सः प्रस्रवणं वारी'त्यमरः। अस्य विष्णोः प्रियं तत्पाथः । तत्तु देवादिपदप्रापकत्वेन प्रसिद्धं । पाथः उदकम् । 'कबन्धमुदकं पाथ' इत्यमरः । अहमश्यां पिबेयं । अश भोजन इति धातोः आशीर्लिङ् । उत्तमपुरुषैकवचने यासुडागमे मिपो अमादेशे अश्यामिति रूपम् । अत्र कर्ता मन्त्रद्रष्टा । यत्र तीर्थभवपाथसः पाने देवयवः देवत्वमिच्छवः । देवशब्दात्क्यजन्तात्क्याच्छन्दसीत्युप्रत्ययः। नरः पुरुषाः मदन्ति हर्षं प्राप्नुवन्ति । मदी हर्षे इति धातोः । सः तीर्थपानकर्ता अस्य विष्णोः बन्धुः प्रेमास्पदः हि श्रुत्यादिप्रसिद्धः । मध्वः मुख्यप्राणावतारः श्रीमध्वाचार्यः, इत्था इत्थमेव अभिषेकादिकं कृत्वा तीर्थपानं कर्ता विष्णोः बन्धुः जात इत्यर्थः । केचिदभ्यश्यामित्यन्वयं कुर्वन्ति । तदयुक्तं । तत्पक्षे अभिशब्दस्य वैयर्थ्यापत्तेः । व्यवहितान्वयप्रसंगाच्चेति ।

ततो ब्रह्मादिकान् देवान् कृष्णद्वैपायनादिकान् ।
ऋषीन् पितृन् सोममुखान् तर्पयित्वा जलेन तु ।।
दक्षिणांशे शिखां धृत्वा तज्जलं भुवि निक्षिपेत् ।।
वस्त्रं द्वितीयं निष्पीड्य सप्तवाताहतं कृतम् ।
स्थापयित्वा तु शिरसि द्वादशाक्षरमन्त्रतः ।।

---

१. यावदर्थमाह शाल्ग्रामचक्रांकितादिरूपे । क्रियावाचकत्वात् उपसर्गेष्वित शेषः ।

२. छन्दसि परेऽपि व्यवहिताश्चेति अभीत्यत्र ।

प्रोक्षयेदुपविश्यैव सर्वांगं शोधयेत्ततः ।
उत्तरीयं सदा धार्यं तद्विना नाचरेत्क्रियाम् ।।

- इति ।

यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।
तृतीयमुत्तरीयार्थं वस्त्राभावे चतुर्थकम् ।।

तथा -

ज्येष्ठभ्रातृमता नैव धार्यं पितृमता तथा ।
नोभाभ्यां पादुके धार्ये तर्जन्यां रौप्यमुद्रिका ।।
स्नानवस्त्राग्रशेषेण नोत्तरीयेण पाणिना ।
मार्जयेदङ्गजातं च स्नानशाट्या न पाणिना ।।
न च निर्धूनयेत् केशान्न तिष्ठन् परिमार्जयेत् ।
मार्जयेद्भिन्नवस्त्रेण नान्यथा मार्जयेत्क्वचित् ।।

चन्द्रिकायां -

नोत्तरीयमधः कुर्यान्नोपर्यधःस्थमम्बरम् ।
अधोवस्त्रं चोत्तरीयं विपरीतं न कारयेत् ।।
अस्नात्वा तु द्विजश्रेष्ठो नैव वस्त्रं प्रसारयेत् ।।

उत्तरीयं वस्त्रं धृतं चेत् अधो न कार्यम् । शिरसः उपरि भागेन निष्कास्य पीडनं न तु पादभागेनेत्यर्थः । अधोवस्त्रं परिधानीयवस्त्रं अधोभागेन निष्कास्य पीडनं न ऊर्ध्वभागेनेत्यर्थः ।

स्नात्वैव वाससी धौते ह्यवच्छिन्ने [१] भवे सति ।

---

१. यच्छिन्नं विभवे सति इति वा पाठः ।

देवस्य त्वेति [1] संप्रोक्ष्य व्याहृत्यादाय वस्त्रकम् ।।
उदुत्यं जातवेदसमित्यादित्यं प्रदर्शयेत् ।
आवहन्तीति प्रावृत्य परिधानं ततः परम् ।।
पूर्वकच्छमधृत्वैव पृष्ठकच्छं न धारयेत् ।।

इदं जीवत्पितृकविषयम् । अजीवत्पितृकेण तु तर्पणान्ते वस्त्र-निष्पीडनं कार्यमिति वक्ष्यते ।

चतुर्गुणस्नानवस्त्रं कृत्वा निष्पीडयेद्बहिः ।
वामप्रकोष्ठे निक्षिप्य द्विराचम्य विशुध्यति ।। - इति ।
अनिष्पीड्य स्नानवस्त्रं सन्ध्याकर्म न चाऽऽचरेत् ।
वस्त्रनिष्पीडनात्तोयं पितृतृप्तिकरं स्थले ।।

जलस्नाने त्वशक्तस्य मन्त्रस्नानं विधीयते ।
आपोहिष्ठेत्यादिऋग्भिस्तिसृभिस्तु ह्यनुक्रमात् ।।
पच्छः [2] पादशिरोहत्सु शिरोहृत्पत्सु चाधतः ।
हृत्पादमस्तकेष्वेवं प्रत्यृचा मार्जयेदथ ।।
मस्तके मार्जनं यत्स्यात्पादैः प्रणवसंयुतैः ।
तारेण [3] पानं गायत्र्याः मन्त्रितस्यांभसस्तु यत् ।
मन्त्रस्नानं हि तत्प्रोक्तं विद्वद्भिरिति निश्चितम् ।।
- इति ।

---

१. देवस्य त्वेति । देवस्य त्वा सवितुरिति मन्त्रेण ।
२. पच्छः - आपोहिष्ठा मयोभुवः । ता न ऊर्जे दधातन । .. इति पादं पादम् ।
३. अंगानामपि गायत्र्या इति च पाठः ।

उत्तरायणमध्ये तु यदा वर्षति वासवः ।
आतपेन सह स्नानं दिव्यस्नानं [१] तदुच्यते ।।
तत्र स्नातस्तु गङ्गायां स्नातो भवति मानवः ।
स्नातुमायान्ति पितरो देवता ऋषयस्त्विह ।।

इति दिव्यस्नानम् ।

## ।। अथ ध्यानस्नानम्।। [२]

ध्यानस्नानं प्रवक्ष्यामि द्वाभ्यामपि परं च यत् ।
स्वे स्थितं पुण्डरीकाक्षं मन्त्रमूर्तिं हरिं स्मरन् ।।
अनन्तादित्यसंकाशमुकुटं वनमालिनम् ।
तत्पादोदकजां धारां निपतन्तीं स्वमूर्धनि ।।
चिन्तयेद् ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम् ।

---

१. दिव्यस्नानमिति ।

स्नानं तु द्विविधं प्रोक्तं वारुणेतरभेदतः ।
तत्रापि वारुणं मुख्यमितरद्गौणमेव तु ।।
आग्नेयं वारुणं ब्राह्मं मन्त्रस्नानं च तत्स्मृतम् ।
पच्छोऽर्धर्चश ऋक्शश्च मार्जनं तन्मयं तृचे ।
ब्रह्महस्तच्युतं तोयं शिरसा धारयेत्...... ।।

इत्यादि स्मृत्यर्थसारे । कदा कथं कार्यमिति तत्रैव ।

२. ध्यानस्नानमिति । धर्माब्धौ तु विष्णुपादोदकविप्रपादोदकप्रोक्षणविष्णुध्यानादि - इत्युल्लेखः कृतोऽस्ति ।

तया संक्षालयेत्[१] सर्वमन्तर्देहगतं मलम् ।
तत्क्षणाद्विरजो मन्त्री जायते भास्करोपमः ।।

योगयाज्ञवल्क्ये तु प्रकारान्तरं -

हृत्स्थितं सर्वभूतानां रविमण्डलसंस्थितम् ।
नीलजीमूतसंकाशं वासुदेवं चतुर्भुजम् ।
स्वदेहे चिन्तयेन्नित्यं सर्वस्नानोत्तमं हि तत् ।।

**अशक्तत्वे तु स्मृतिः -**

आपः स्वभावतो मेध्याः किं पुनर्वह्निसंयुताः ।
ताभिः स्नायादातुरस्तु मेध्या वै तूष्णवारिणः ।।

- इति ।

तद्विधिस्तु -

पात्रे शीतोदकं स्थाप्य पूर्वमुष्णोदकं ततः ।
स्थापयित्वा पुनः शीतमुदकं मूलमृत्तिकाम् ।।
कुशं च स्थापयेत्तत्र पूर्ववद्देवतां स्मरेत् ।
ततः स्नात्वा ध्यानमन्त्रं स्नानं विधिवदाचरेत् ।।
अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् ।
आर्द्रेण वाससा वाऽपि देहसंमार्जनं विदुः ।।

- इति ।

शूर्पवातनखाग्रांबु स्नानवस्त्रजलं तथा ।
दीपखट्वानरच्छाया मार्जनीरेणुरेव च ।।

---

१. संक्षालयेत् । संक्षालितमिति ध्येयमित्यर्थः ।

दिवा विभीतकच्छाया रात्रावश्वत्थसंभवा ।
केशांबु गर्दभरजो हन्ति पुण्यं पुरातनम् ।।
अजरजः खररजस्तथा संमार्जनीरजः ।
स्त्रीणां पादरजश्चापि हन्ति पुण्यं पुरातनम् ।।
अजउष्ट्रखराणां च दम्पत्योर्गुरुशिष्ययोः ।
शिवनन्दिकयोर्मध्यो हन्ति पुण्यं पुरातनम् ।।

- इति ।

पारक्ये कूपवाप्यादौ मृत्पिण्डान् त्रीन् समुद्धरेत् ।
पश्चात्स्नायादन्यथा तु न स्नानफलमाप्नुयात् ।।
नित्यं नैमित्तिकं स्नानं क्रियान्तः स्नानमेव च ।
तीर्थाद्यभावे [१] कर्तव्यं उष्णोदकपरोदकैः ।।
सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
आसु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ।।

देवलः -

तपनस्य सुता गङ्गा गोमती नर्मदा तथा ।
गोदावरी कृष्णवेणी कावेरी च मलापहा ।।
रजसा न प्रदुष्यन्ति ये चान्ये पुन्नदाः स्मृताः ।।

पुन्नदाः शोणभद्रादयः [२]।

---

१. तीर्थाद्यभाव इति । नद्यादीनामभावे उष्णोदकेन कूपाद्युदकेन वा स्नानं कार्यम् । उक्तमग्रे । अभावे कूपवाप्यादेरिति । तीर्थं शास्त्राध्वरेक्षत्रोपायेत्यादि विश्वः ।

२. शोणभद्रादयः। असमुद्रगत्वादस्य ग्रहणम् । अत्रेत्यादिशब्देन न तावद् ब्रह्मपुत्रादयः तेषां समुद्रगत्वेन ग्रहणात् ।

उपाकर्मणि चोत्सर्गे प्रातःस्नाने तथैव च ।
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ।।
अभावे कूपवाप्यादेर्नित्यपूर्णजलस्य तु ।
रजोदोषेऽपि नद्यादौ स्नानं कुर्याद्विधानतः ।।
विना दर्भेण यत्स्नानं यच्च दानं विनोदकम् ।
असंख्यातं तु यज्जप्तं तत्सर्वं निष्फलं भवेत् ।।

- इति ।

सम्यग्धौतं नवं श्वेतं सदशं चाष्टहस्तकम् ।
अहतं तद्विजानीयात्सर्वकर्मसु पावनम् [१]।।
नग्नश्च हतवस्त्रश्च अकच्छः पुच्छकच्छकः ।
श्रौतं स्मार्तं द्विजः कर्म कुर्याच्चेन्निष्फलं भवेत् ।।
मलवस्त्रो दग्धवस्त्रच्छिन्नवस्त्रोऽर्धवस्त्रकः ।
एकवासा अवासाश्च नग्न एव भवेन्नरः ।।
यज्ञोपवीतं वस्त्रार्थे धारयेद्वा द्विजोत्तमः ।। - इति ।

## ।। अथोर्ध्वपुण्ड्रधारणं ।।

**पाद्मे -**

श्रीरङ्गे द्वारकायां [२]च श्रीकूर्मे च तथा स्थिताम् ।

---

१. पावनं पवित्रं पवित्रकारकं वा । पूञ् पावने ।

२. द्वारकायां चेति । इदं गोपीचन्दनमाहात्म्यं गर्गसंहितायामपि । तत्र द्वारकाखण्डे द्वारकामाहात्म्ये वेदादौ गोपीचन्दनोपनिषदि च ।

सिहाद्रौ च प्रयागे च वाराहे तुलसीवने ।।
गृहीत्वा मृत्तिकां भक्त्या शालग्रामजलैः सह ।
स्नात्वा पुण्ड्रं मृदा कुर्याद्धृत्वा चैव तु भस्मना ।।
दैवानभ्यर्च्य गन्धेन स्नानकाले जलेन तु ।
गायत्रीमूलमन्त्राभ्यां त्रिवारमभिमन्त्र्य च ।।
अथोर्ध्वपुण्ड्रं धृत्वाङ्गे विष्णुसायुज्यमाप्नुयात् ।।
यज्ञो दानं जपो होमः श्राद्धं स्वाध्यायतर्पणम् ।
भस्मीभवन्ति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् ।।

- इति ।

तत्प्रकारश्च तत्रैव -

नासादिकेशपर्यन्तं दण्डाकारः सुशोभनः ।
अच्छिद्रान्वितपुण्ड्रस्तु सच्छिद्रं हरिमन्दिरम् ।।
मध्ये छिद्रान्वितः पुण्ड्रो हरिमन्दिरसंज्ञितः ।
विप्रैस्तु सततं धार्यः स्त्रीभिश्च शुभदर्शिभिः ।।
सुवासिन्योऽपि बिभृयुस्तिलकोपरि कुंकुमम् ।
अन्यथा पातकं प्रोक्तं तत्पाकं [१] निष्फलं [२] भवेत् ।।
अङ्गुष्ठतर्जनीभ्यां तु पुष्टिमोक्षाय पुण्ड्रकम् ।
मध्यमानामिकाभ्यां च आयुष्यार्थं भवेद्ध्रुवम् ।।

---

१. तत्पाकं । तया कृतमन्नादि ।
२. निष्फलं । नैवेद्यवैश्वदेवानर्हम् । भक्ष्यायोग्यं च ।

पुण्ड्राणां प्रमाणं तु ब्रह्माण्डे -

चतुरङ्गुलिदीर्घः स्याल्ललाटे तूर्ध्वपुण्ड्रकः ।
दशाङ्गुलस्तूदरे स्याद्वक्षःसप्ताङ्गुलः स्मृतः ।
चतुरङ्गुलः कण्ठदेशे पार्श्वयोस्तु दशाङ्गुलः ।
अष्टाङ्गुलस्तु बाह्वोः स्यादंसयोश्चतुरङ्गुलः ।।
ऊर्ध्वाधोभागयोः पृष्ठे मूर्ध्नि च द्व्यङ्गुलः स्मृतः ।
दक्षस्तनोर्ध्वभागे स्यात् श्रीवत्सं तु षडङ्गुलम् ।।

क्रमस्तु -

ललाटोदरवक्षस्सु कण्ठे पार्श्वे तु दक्षिणे ।
दक्षे भुजे चांसभागे वामे पार्श्वे भुजेऽसकौ ।।
पृष्ठाधोभाग ऊर्ध्वे च केशवादीनि निन्यसेत् ।
चतुर्थ्यंतैर्नमोन्तैश्च [1] क्रमाद्द्वादशनामभिः ।।
एवं शीर्षे वासुदेवं श्रीवत्सं दक्षिणे स्तने ।
दण्डाकारं ललाटे च पद्माकारं तु वक्षसि ।।
वेणुपत्राकृतिं बाह्वोरन्यान् दीपाकृतीन्न्यसेत् ।।

इति ऊर्ध्वपुण्ड्रप्रकरणम् ।।

---

१. चतुर्थ्यन्तैः ओं केशवाय नमोंतैः । नमः शब्दो अन्ते येषां । नमःस्वस्तिस्वाहे-त्यादिना विहितचतुर्थ्यामपि अज्ञानिनां स्पष्टार्थम् । ओं केशवाय नमः इत्यादि द्वादशभिरिति यावत् ।

पुण्ड्रोपरि मुद्राधारणमाग्नेये -

चक्रशङ्खगदादीनि गोपीचन्दनमृत्स्नया ।
विष्ण्वायुधानि बिभृयात् ज्ञानमुक्तिप्रदानि वै ।।
चक्रमेकं न्यसेद्गण्डे दक्षिणे द्विजसत्तमः ।
शङ्खमेकं वामगण्डे ललाटे धारयेद्गदाम् ।
चक्रद्वयं दक्षकुक्षौ वामे शङ्खद्वयं तथा ।।
दक्षभागे तु चक्रस्य द्वयं धार्यं तथैव च ।
दक्षबाहूर्ध्वभागे तु न्यसेच्चक्रद्वयं बुधः ।।
तदधः शङ्खमेकं च मध्ये पद्मद्वयं तथा ।
वामबाहूर्ध्वभागे तु न्यसेच्छङ्खद्वयं बुधः ।।
तदधश्चक्रमेकं तु मध्ये चैव गदाद्वयम् ।
एकैकस्मिन्भुजे न्यस्य नाममुद्राचतुष्टयम् ।।
हृदि कण्ठे दक्षिणांसे चक्रत्रयमुदाहृतम् ।
शङ्खत्रयं स्याद्वामांसे कुक्षौ चक्रचतुष्टयम् ।।
अन्योर्ध्वपुण्ड्रेषु तथा चक्रशङ्खादि विन्यसेत् ।
सर्वत्र नाममुद्रा च एकैका च न संशयः ।।
चक्रद्वयं दक्षकुक्षौ पद्ममेकं न्यसेत्स्तने ।
वामे तु शंखद्वितयं गदामेकं तु पृष्ठतः ।।
अधोर्ध्वभागद्वितयं एकमेकं सुदर्शनम् ।।

- इति ।

चक्रादिमन्त्रास्तु -

सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ ।

अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ।।१।।
पांचजन्य निजध्वानध्वस्तपातकसंक्षय ।
पाहि मां पापिनं घोरं संसारार्णवपातिनम् ।।२।।
संसारभयभीतानां योगिनामभयप्रदम् ।
पद्महस्तेन यो देवो योगीशं तं नमाम्यहम् ।।३।।
ब्रह्माण्डभुवनारम्भे मूलस्तम्भो गदाधरः ।
कौमोदकी करे यस्य तं नमामि गदाधरम् ।।४।।
नारायण नमस्तेऽस्तु नाममुद्रांकितं नरम् ।
दृष्ट्वैव लभते मुक्तिं चाण्डालो ब्रह्मघातकः ।।५।।

- इति ।

यज्ञोपवीतवद्धार्याः शंखचक्रादयो द्विजैः ।
संतप्तेनाग्निना चैव ब्राह्मणेन विशेषतः ।।
प्रक्षाल्यायुधतोयेन शिरोमूलेन मार्जयेत् ।
नमो मुद्राभ्य इत्युक्त्वा न भुवि स्थापयेत् च ताः ।।
प्रतिष्ठिताभिर्मुद्राभिर्धारणं परिकीर्तितम् ।
प्राणप्रतिष्ठामन्त्रं वा न्यस्य तप्त्वा तु धारयेत् ।।
नान्यथा तु फलावाप्तिः कृतं कर्म वृथा भवेत् ।।

- इति ।

अथ तुलसीमालाधारणमुक्तं स्कान्दे -

तुलसीकाष्ठजां धात्रीफलपद्माक्षसम्भवाम् ।
मालां च पंचगव्येन क्षालितां मन्त्रयेत्पुनः ।।

मूलमन्त्रेण गायत्र्या देवाय विनिवेद्य च ।
धूपं दीपं च नैवेद्यं दत्वा मन्त्रेण पूजयेत् ।।
सद्यो जातं प्रप्रपद्यामि सद्यो जाताय वै नमः ।
ततो मालां गुरोः कण्ठे स्थापयित्वा स्वयं गले ।।
धारयेद्देवतापूजाजपकाले विशेषतः ।।
तुलसीकाष्ठसम्भूते माले कृष्णजनप्रिये ।
बिभर्मि त्वामहं कण्ठे कुरु मां कृष्णवल्लभम् ।। - इति ।
इति मालाधारणम् ।।

## ।। अथ सन्ध्यावन्दनम् ।।

मौजीबन्धनमारभ्य सायं प्रातश्च कालयोः ।
मध्याह्नेऽपि च कर्तव्यं सन्ध्यावन्दनमिष्टदम् ।।
गायत्री चैव सावित्री तथैव च सरस्वती ।
सन्ध्यात्रये च विज्ञेया देवता विष्णवधिष्ठिताः ।।
अथ सन्ध्यावन्दनकाल उक्तः -
पूर्वां सन्ध्यां सनक्षत्रां उत्तरां सदिवाकराम् ।
उत्तरामुपविश्यैव ......... ।।[१]
- इत्युक्तमाचार्यैः।[२]
पूर्वां सन्ध्यां प्रातःसन्ध्यां उत्तरां माध्याह्निकीं । पुनरुत्तरग्रहण-

---

१. 'वाग्यतः सर्वदा जपेत्' इति चतुर्थः पादः ।
२. सदाचारस्मृतौ इति शेषः ।

सामर्थ्यबलात् । उत्तरां सायंकालसन्ध्यां सदिवाकरां कुर्यादित्यर्थः। तां सायंकालसन्ध्यां अर्घ्यजपकाले उपविश्यैव कुर्यादित्यर्थः । प्रातःसन्ध्यावन्दनजपस्य 'आसूर्यदर्शनात्तिष्ठेत्ततस्तूपविशेत वा' इति तिष्ठतोऽपि विधानात् सुधांशुसन्निधौ तु मुख्यकाल उक्तः।

उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातःसन्ध्या त्रिधा मता ।।
उत्तमा सूर्यसहिता मध्यमास्तमिते रवौ ।।
अधमा तारकोपेता सायंसन्ध्या त्रिधा मता ।।
आ अर्धयामादासायं सन्ध्या माध्याह्निकी स्मृता।। - इति ।

आसार्धयामादासायमिति क्वचित्पाठः ।

उपासीत द्विजः सन्ध्यां प्राङ्मुखोदङ्मुखोऽपि वा ।
गृहे त्वेकगुणा सन्ध्या गोष्ठे दशगुणा स्मृता ।।
सहस्रगुणिता नद्यां अनन्ता विष्णुसन्निधौ ।।

बहिर्दशगुणेति पाठान्तरम् । अनन्तानन्तफलदेत्यर्थः ।।

।। अथ प्राणायामः।।

कनिष्ठानामिकाभ्यां च गृहीत्वा वामभागतः ।
ह्रस्वोच्चारणकालाख्या मात्राः षोडश रेचने ।।
द्वात्रिंशत्पूरणे प्रोक्ताः चतुःषष्टिस्तु कुम्भके ।
दक्षनासापुटेनैव पूर्वं वायुं विरेचयेत् ।।
अंगुष्ठेन पुटं बध्वा नासायां दक्षिणं पुनः ।

वामभागेन संपूर्य धारयेत्पूर्णकुम्भवत् ।।
पंचांगुलीभिर्नासाग्रपीडनं वायुधारणे ।
मुद्रेयं सर्वपापघ्नी वानप्रस्थगृहस्थयोः ।।
कनिष्ठानामिकांगुष्ठैर्यतेश्च ब्रह्मचारिणः ।
नासाग्रपीडनं प्रोक्तं मन्त्रार्थं स्मृतिपूर्वकम् ।।

सन्ध्यादावर्घ्यदाने च प्राणायामैकमाचरेत् ।
आदावन्ते च गायत्र्याः प्राणायामास्त्रयस्त्रयः ।।
मन्त्रमावर्तयेच्चित्ते त्रिषड्वारमथापि वा ।
नवद्वादशवारं वा प्राणायामोऽयमीरितः ।।
अयं सगर्भः सफलो मन्त्रार्थस्मृतिवर्जितः[१]।
अगर्भः स्वल्पफलकः कुर्यात्तस्मात्सगर्भकम् ।।
विरेचयेत् । विसर्जयेत् ।

**गायत्रीप्राणायामस्वरूपमाह योगयाज्ञवल्क्यः -**

सोंकारसप्तव्याहृतिकां गायत्रीं च सतारकाम् ।
ओमापोज्योतिसंयुक्तामन्ते चोंकारसंयुताम् ।।
दशप्रणवसंयुक्तां मन्त्रमेवं हृदि स्मरेत् ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यत ।।

- इति ।

---

१. मन्त्रार्थस्मृतिवर्जितः अगर्भः इति उत्तरश्लोकार्धेनान्वयः ।

मन्त्रार्थस्तु -

ओंनामा [1] भगवान् विष्णुरधिकोञ्चगुणत्वतः [2]।।

भूः पूर्णः । भुवः लक्ष्म्याः वरः । सुवः अनन्तसुखः । महः सर्वपूज्यः । जनः सृष्टिकर्ता। तपः आलोचनकर्ता । सत्यं उत्तमानन्दज्ञानवान् । यः सवित्रन्तर्गतो विष्णुः । नः अस्माकं । धियः बुद्धीः प्रचोदयात् प्रेरयेत् । सवितुः जगत्सवितुः देवस्य क्रीडादिविशिष्टस्य विष्णोः वरणीयं भजनीयं । भर्गः जगत्पोषणप्रेरणकर्तृ । तत् व्याप्तं। अग्न्यन्तर्गतपरशुरामरूपं धीमहि । ध्यायेम वयमिति शेषः। ओमापोज्योतिरित्यत्र आ पालनादापः [3]। बहुरूपत्वात् स्त्रीरूपत्वात् विष्णोः बहुवचनान्तस्त्रीलिङ्गशब्दवाच्यत्वं । ज्योतिः प्रकाशरूपं । रसः श्रेष्ठः। अमृतं मोक्षदातृ । ब्रह्म सकलगुणसंपूर्णं ।

भूर्भुवःसुवरित्येषां अर्थान्तरं तु -

भूर्नामा स्फूर्तिरूपत्वाद्भूरिर्वीर्यत्वतो भुवः।
सुवः सुबलरूपत्वात् ...... ।। - इति ।

ऐतरेयभाष्ये उक्तम् ।। [4]

---

१. ओंनामेति । अवतीति ओम् । अव् रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छाप्त्यवादीप्त्यालिङ्गनहिंसादानभागवृद्धिषु । स्पष्टं श्रीराघवेन्द्रस्वामिकृतगीताटिप्पण्याम् । (गीताविवृत्यां)

२. अधिकोञ्चगुणत्वतः । अधिकोञ्चगुणत्वाद्धेतो : ।

३. आ पालनात् । पा पाने । आङ् मर्यादादौ ।

४. श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ।

इति दशप्रणवसंयुक्तगायत्र्याः प्राणायामः।

एवमष्टाक्षरादिप्राणायामेषु मन्त्रार्थानुसन्धानं रेचकपूरक-कुम्भकपूर्वकमन्त्रावृत्तिः वायुं धृत्वैव शक्त्यनुसारेण कार्या ।

प्राणायामांश्चरेत् त्रींस्तु यथाकालमतन्द्रितः ।
अहोरात्रकृतं पापं तत्क्षणादेव नश्यति ।।

- इति स्मृतिः।

प्राणायामत्रयं नाम श्वासोच्छ्वासं धृत्वा उक्तप्रकारेण नववारं मनसा दशप्रणवसंयुक्तगायत्रीमन्त्रावृत्तिः।। इति प्राणायामप्रकरणम् ।।

## अथ मार्जने ऋग्विधाने उक्तं -

प्राणानायम्य विधिवद्वाग्यतः संयतेतेन्द्रियः ।
अथ सन्ध्यामुपासिष्ये इति संकल्प्य मार्जयेत् ।।
नवप्रणवसंयुक्तै [१]ह्यापोहिष्ठेति पादकैः ।
वामांगुलिमधः स्थाप्य श्रीतुलस्या कुशैर्द्विजः ।।
तर्जनीमध्यमाभ्यां वा मूर्ध्नि सिंचेज्जलं द्विजः ।
भूमौ शिरसि चाऽऽकाशे [२] आकाशे भुवि मस्तके ।।
मस्तके च तथाऽऽकाशे भूमौ च नव धारयेत् ।।
नद्यां तीर्थे ह्रदे वाप्यां रौप्यताम्रादिपात्रके ।
वामहस्ते जलं धृत्वा कुर्यान्मार्जनमात्मनः ।। - इति ।

---

१. नवप्रणवसंयुक्तैः । ओं भूः ओं भुवः इत्यादिभिः ।

२. आकाशे । भूमौ प्रथमे शिरसि द्वितीये आकाशे तृतीये । पुनश्चाकाशे चतुर्थे । मस्तके पुनरेव मस्तके ।

अष्टाक्षरं नव पदं पादादौ ब्रह्महा भवेत् ।
पादान्ते मार्जनं कुर्याद् ब्रह्महत्यां व्यपोहति ।।
आपोहिष्ठादिभिः पूतं जलं भूमौ न पातयेत् ।
सूर्यश्चेत्यादिमन्त्रेण मन्त्रयित्वा पिबेदपः ।।

आदिशब्दात् माध्याह्निकसन्ध्यायाम् । आपः पुनन्त्विति मन्त्रेण । सायंकाले अग्निश्चेत्यनेन मन्त्रेणेति ग्राह्यम् ।

तत आचम्य नवभिः आपोहिष्ठेति पादकैः ।
शन्नोदेवीत्यष्टभिश्च अर्धर्चैस्तिसृभिस्तथा ।।
इदमापः प्रवहतेत्यादिऋग्भिश्च मार्जयेत् ।
ऋतं चेति पिबन् विद्वान् पापमामरणान्तिकम् ।।
मनोवाक्कायजं सर्वं क्षपयेदघमर्षणम् ।।

- इति ।

आपस्तम्बैर्दधिक्राव्णेत्यादिमन्त्रैस्तु मार्जयेत् ।
शिवेन मा चक्षुषेति जप्त्वा पापं नरः क्षिपेत् ।।

पारिजाते तत्प्रकार उक्तः -

उद्धृत्य सजलं हस्तं दक्षगोकर्णवत्कृतम् ।
निधाय नासिकाग्रे तु पापं च पुरुषं स्मरन् ।।
दक्षनासापुटेनैव पापात्मानं व्यपोहयेत् ।
तज्जलं नावलोक्याथ वामभागे क्षितौ क्षिपेत् ।।
मार्जनं मन्त्रपूतस्य जलस्य प्राशनं तथा ।
मनोवाक्कायजं पापं नाशयेदघमर्षणम् ।।

इति मार्जनम् ।।

अथार्घ्यमाह वसिष्ठः -

प्रोक्ष्योत्थाय प्रत्यहं तु दद्यादर्घ्यत्रयं द्विजः ।
गायत्र्या सूर्यसंस्थं हि ध्यात्वा विष्णुं सनातनम् ।।
द्वौ पादौ च समौ कृत्वा रविं वीक्ष्य जलाञ्जलिम् ।
गोशृङ्गमात्रमुद्धृत्य पाणिना प्रक्षिपेज्जले ।।

व्यासः -

ओंकारात्तोयमादाय गायत्र्या चाभिमन्त्रितम् ।
आदित्याभिमुखस्तिष्ठन् त्रिः क्षिपेत्सन्ध्ययोर्द्वयोः ।।
अङ्गुष्ठाभ्यां तु तर्जन्योः स्पर्शनं तु विवर्जयेत् ।
उक्तकालमतिक्रान्ते दद्यादर्घ्यचतुष्टयम् ।।

स्थले अर्घ्यदाने विशेषः -

शुद्धतृणादिनाच्छाद्य भूमिं तत्राञ्जलिं क्षिपेत् ।
सर्वकालमुपासा तु सन्ध्यायाः पार्थिवेष्यते ।।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ।।

- इति विष्णुपुराणे ।

सूतकमृतकभ्रान्तिरोगचोरादिभयाद्यभावे सन्ध्यावन्दनस्य नित्यत्वं उक्तम् ।

अकरणे प्रत्यवायश्च अत्रिणा उक्तः।

नोपतिष्ठन्ति ये सन्ध्यां स्वस्थावस्थास्वपि द्विजाः ।
चण्डालास्ते तु विज्ञेया नतेषां सुगतिर्भवेत् ।।
हिंसन्ति व महापापा भगवन्तं दिवाकरम् ।।

- इति ।

अर्घ्यं दत्वा केशवादीन् शुक्लपक्षे तु द्वादश ।
तर्पयेत् कृष्णपक्षे तु तथा संकर्षणादिकान् ।।
ततः प्रदक्षिणं कुर्यादसावादित्यमन्त्रतः ।
सूर्यस्थितं हरिं ध्यात्वा ततः पश्चाद् द्विराचमेत् ।।
- इति ।

## ।। अथ ब्रह्मयज्ञतर्पणम् ।।

तदुक्तमाचार्यैः [१] -

गायत्राचांजलिं दत्वा ध्यात्वा सूर्यगतं हरिम् ।
मन्त्रतः परिवृत्याथ समाचम्य सुरादिकान् ।।
तर्पयित्वा निपीड्याथ वासो विस्तृत्य चांजसा ।
अर्कमण्डलगं विष्णुं ध्यात्वैव त्रिपदीं जपेत् ।।
- इति ।

अथ अर्घ्यानन्तरं तर्पणोक्त्या मध्ये ब्रह्मयज्ञो ज्ञेयः।

तथा च व्याघ्रपादः -

देवान् ऋषींश्च पित्रादीन् स्वशाखाविधिचोदितान् ।
तर्पयेद् ब्रह्मयज्ञान्ते स्नानान्ते तु विशेषतः ।।
- इति ।

स्नानान्ते चेत्यनेन जलतर्पणमुच्यते ।

---

१. श्रीमदानन्दतीर्थभगवत्पाचार्यैः सदाचारस्मृतौ उक्तम् ।

**ब्रह्मयज्ञकालस्तु -**

आपस्तम्बशाखायां स्वाध्यायब्राह्मणे उक्तः -

'मध्यन्दिने प्रबलमधीयीत' इति ।

'य एवं विद्वानहोरात्र उषस्युदित' इति च ।

अत्र उषसीत्यनेन अरुणोदयो ग्राह्यः। 'प्रत्यूषोऽहर्मुखं कल्यमुषः प्रत्युषसी अपी'त्यमरेण अहरारम्भकालस्य अरुणोदयात्मकस्य उषःशब्दवाच्यत्वोक्तेः। महारात्रशब्देन रात्रिं त्रिभागां कृत्वा तृतीयो भागो ग्राह्यः। महारात्रशब्दस्य अर्धरात्रवाच्यत्वेऽपि मुख्यार्धरात्रस्य कर्मकालत्वाभावात् तं त्यक्त्वा अमुख्यो गृह्यते । रात्रितृतीयभागे अर्धरात्रांशघटिकात्रयस्य प्रवेशाच्च मुख्यो वा । इदं च द्वादशी-स्वल्पत्वे [1] रात्रितृतीयभागे 'आमध्याह्नाः क्रियाः सर्वा' इति वचनेन सूर्योदयात्पूर्वं प्रातःसन्ध्यावन्दनादिमाध्याह्निकसन्ध्यावन्दनपर्यन्तं सर्वकर्मणां कर्तव्यत्वोक्तेः। तस्मिन् दिवसे अर्घ्यान्ते ब्रह्मयज्ञ-कालविधायकं महारात्रपदं नतु प्रतिदिनं तु । अरुणोदये वा सूर्योदये वा मध्याह्ने वा ब्रह्मयज्ञः कार्यः। 'उषस्युदित' इत्यादि विधानात् ।

यत्तु वसिष्ठेन -

कृतांनत्यक्रियाकाण्डः कृतहोमो जितेन्द्रियः ।
ग्रामात्प्राचीनभागे तु यत्र तिष्ठेज्जलाशयः ।।
अपां समीपे नियतः ब्रह्मयज्ञं समाचरेत् ।।

---

१. स्वल्पवेध इति चान्यस्मिन् पुस्तके ।

इत्युक्तम् । 'मध्यन्दिने प्रबलमधीयीते'ति श्रुतौ च उक्तं तत्तु अशक्तविषये केनचिन्निमित्तेन अरुणोदयस्नानासम्भवे वा ज्ञेयम् ।

श्रीमदाचार्यैः अर्घ्यानन्तरं अरुणोदये तर्पणविधानेन तर्पणात्पूर्वं अरुणोदय एव ब्रह्मयज्ञस्य प्राप्तेः। 'आसूर्यदर्शनात्तिष्ठेदि'ति तर्पणानन्तरं क्रियमाणगायत्रीजपकाले सूर्योदयपर्यन्तं अवस्थानोक्त्या ब्रह्मयज्ञतर्पणस्य अरुणोदयकालिकत्वासिद्धेः। वसिष्ठस्मृत्यपेक्षया सदाचारस्मृतावुक्तव्यासवाक्यस्य प्राबल्यात् । श्रीमदाचार्यैः स्मृतिषु विरुद्धासु प्राप्तसंशयनिवृत्त्या सम्यगनुष्ठानार्थं कर्मानुष्ठानमध्ये हरिस्मरणार्थं च व्यासवाक्यानां उदाहृतत्वात् । नहि सदाचारस्मृतिमात्रेण शौचाचमनादिकर्मानुष्ठानं सिद्ध्यति । तत्प्रकारविधेरनुक्तत्वात्। अतः शौचादिकरणप्रकरणज्ञानार्थं स्मृतिषु द्रष्टव्यासु श्रुतिषु स्थितस्य कालस्य क्रमादेश्च ग्रहणे सदाचारस्मृतेर्वैयर्थ्यापत्तेः।

न च सदाचारस्मृतिः सावकाशा ।

गायत्र्या चांजलिं दत्वा ध्यात्वा सूर्यगतं हरिं ।
मन्त्रतः परिवृत्त्याथ समाचम्य सुरादिकान् ।।
तर्पयित्वा निपीड्याथ वासो विस्तृत्य चांजसा ।
अर्कमण्डलगं विष्णुं ध्यात्वैव त्रिपदीं [१] जपेत् ।।

---

१. त्रिपदीम् गायत्रीम् ।

इति क्रमनियामकत्वात् प्रत्ययाथशब्दयोः निरवकाशयोः सत्वेन तद्विरोधापत्तेः । अत एव पूर्वमीमांसायां 'द्वादशाहे सत्रयागे अध्वर्युः गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती'त्यादौ त्वाप्रत्ययस्य समान-कर्तृकयोः पूर्वकालविहितत्वात् श्रौतं कर्माश्रित्य यजमानदीक्षानन्तरं ब्रह्मणो दीक्षाङ्गीकृता । न च स्मृतीनां प्राबल्यं निर्णयत्वेन दौर्ब-ल्यात् । सदाचारस्मृत्युदाहृतव्यासस्मृतेः निर्णायकत्वेन प्राबल्यात् । तदनुसारेणैव कर्मानुष्ठानस्य आवश्यकत्वात् ।

विष्णुतीर्थीये -

देवादितर्णात्पूर्वं सन्ध्याङ्गत्वेन यो जपेत् ।
गायत्रीं चान्यमन्त्रांश्च तज्जपो निष्फलो भवेत् ।।

इति प्रत्यवायोक्तेश्च ।।

ननु 'न कर्मणि कर्मारम्भ' इति निषेधात् सन्ध्यावन्दनाख्य-कर्ममध्ये ब्रह्मयज्ञतर्पणं चेति प्रधानकर्मद्वयं कथं कार्यमिति चेन्न । अस्य निषेधस्य सामान्यत्वेन, 'गायत्र्या चांजलिं दत्वा अथ ब्रह्मयज्ञानन्तरं समाचम्य सुरादिकान् तर्पयित्वा वासः वस्त्रं निष्पीड्य विस्तृत्य त्रिपदीं जपेदि'ति विशेषवाक्येन बाधात् । अपवादाभावस्थले अस्य निषेधस्य सावकाशत्वात् । अत एव ज्योतिष्ठोमादिकर्तृभिः बहुदिवससाध्यज्योतिष्ठोमादिमध्ये नित्यकर्म-स्नानसन्ध्यावन्दनादिकं विशेषवाक्यबलात् क्रियत एव । अथवा अर्घ्यान्त एव प्रधानसन्ध्या जपोपस्थानादिकं तु तदङ्गम् । अत एव

सूतकादौ अर्घ्यान्तमेव सन्ध्यावन्दनं क्रियते । जपोपस्थानादि-निषेधात् तत्र क्रियते। तावन्मात्रस्यैव प्रधानसन्ध्यात्वेन ब्राह्मण्य-सिद्धेः । अतो न कर्मणि कर्मारम्भ इति निषेधस्य प्राप्तिरेव नास्तीति ।। इति ब्रह्मयज्ञकालनिर्णयः।।

### ।। अथ ब्रह्मयज्ञकरणप्रकारः।।

प्रक्षाल्य [१] पादौ हस्तौ च द्विराचम्य कुशासने ।
उपविश्य प्राङ्मुखो वा दर्भपाणिरुदङ्मुखः ।।

- इति ।

आचमनं तु आपस्तम्बशाखायां -

'ततः दक्षिणत उपवीतयोपविश्य हस्ताववनिज्य त्रिराचमेत्। द्विः परिमृज्य [२] सकृदुपस्पृश्य। यत्सव्यं पाणिपादौ प्रोक्षति । शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभे'त्युक्तम् । उपवीतया उपवीतं दक्षिणभागत एव स्थापयित्वेत्यर्थः । अवनिज्य प्रक्षाल्य । त्रिराच-मेत् । त्रिवारं मुखमध्ये गायत्रीपादत्रयेणोदकं गृह्णीयात् । द्विः परि-मृज्येत्यादौ आपोहिष्ठेत्यादिनवपादैः। 'ओं भूः'इत्यादिद्वादशमन्त्रैश्च।

पूर्वोक्ताचमनस्थलेषु क्रमेणोदकेन स्पर्शो ज्ञेयः।
तथा चाऽश्वलायनः -

---

१. प्रक्षाल्येति । पादौ प्रक्षाल्य दर्भपाणिः सन् प्राङ्मुख उदङ्मुखो वा कुशासने उपविश्य इत्यन्वयः ।

२. द्विः परिमृज्य । द्विवारं मार्जनं कृत्वा । 'द्विस्त्रिचतुर्भ्यः सुच्' ।

गायत्र्या त्रिः पिबेदापोहिष्ठेति नवभिः स्पृशेत् ।
व्याहृतिभिः शिरोमन्त्रैरङ्गानि ब्रह्मयज्ञकैः ।।

ततः प्राणानायम्य । 'ब्रह्मयज्ञेन यक्ष्य' इति संकल्प्य । वामपादोपरि दक्षिणपादं वामहस्तोपरि दक्षिणहस्तं स्थापयित्वा । अथवा हस्ताङ्गुष्ठं दक्षिणहस्ताङ्गुष्ठेन धृत्वा दक्षिणतर्जन्या ह्यङ्गुलिचतुष्टयं वामाङ्गुष्ठतर्जनिमध्ये कुशे श्रीतुलसीसहितं स्थापयित्वा कुक्कुटासनेनोपविश्य दक्षिणजानूपरि न्यसेत् । ततः 'विद्युदसि विद्यमे पाप्मानमृतात्सत्यमुपैमी'ति मन्त्रमुक्त्वा सकृत्प्रणवकं सकृत्तिस्रो व्याहृतीश्चोच्चार्य । ततः गायत्रीं पादशः अर्धर्चशः ऋक्शः उच्चारयेत् ।

तत्प्रकारस्तु -

ओं भूर्भुवःस्वः। तत्सवितुर्वरेण्यं । भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।। इति पादशः ।

ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।। इति अर्धर्चशः ।

ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ।। इति ऋक्शः ।

अग्निमीळेति सूक्तं।। वायवायाहीति सूक्तं।। पुरुषसूक्तम् ।। अग्निर्वैदेवानामवमो विष्णुरिति ब्राह्मणम् ।। अथ महाव्रतम् ।। एष पन्था एतत्कर्म । अथातः संहिताया उपनिषत् । विदामघवन्विदा महाव्रतस्य पंचविंशतिं सामिधेन्य इति उपनिषदम् ।। इषेत्वोर्जे-

त्वेति यजुर्वेदम् ।। अग्न आयाहीति सामवेदम् ।। शन्नोदेवीरित्यथर्वण वेदम् ।। नारायणं सुरगुरुं । अशोच्यानन्वशोचस्त्वमिति भारतम् ।। जन्माद्यस्य यतोऽन्वयादिति भागवतम् ।। अथ शिक्षां प्रवक्ष्यामीति शिक्षाम् ।। समाम्नायः समाम्नात इति निरुक्तम् ।। वृद्धिरादैच् इति व्याकरणम् ।। मयरसतजभनलगसंमितमिति छन्दः।। पंचसंवत्सरमयमिति ज्योतिषम् ।। गौःग्मेति निघण्टम् ।। अथैतस्य समाम्नायस्येति कल्पसूत्रम् ।। अथातो धर्मजिज्ञासेति पूर्वमीमांसा ।। अथातो दैवी मीमांसा सविष्णुराहि तं ब्रह्मेत्याचक्षत इति दैवी मीमांसा ।। अथातो ब्रह्मजिज्ञासेति ब्रह्ममीमांसा ।। तथा श्रीमद्भाष्यादिकं च किंचित्किंचित्पठित्वा ।। तच्छंयोरावृणीमहे इत्यादिकमुक्त्वा ।

यस्य स्मृत्येति सर्ववेदादिप्रतिपाद्यविष्णोः समर्प्य पुनराचमनद्वयं कृत्वा देवर्षिपितृनामकं देवर्षिपित्रन्तर्गतश्रीविष्णुप्रीत्यर्थं देवर्षिपितृतर्पणमहं करिष्ये । इति संकल्प्य।देवादितर्पणं कुर्यात् ।।

तत्प्रकारमाह व्यासः [१] -

एकैकमञ्जलिं देवा द्वौ द्वौ तु ऋषयस्तथा ।
अर्हेति [२] पितृंस्त्रींस्त्रीं स्त्रियश्चैकैकमञ्जलिम् ।। - इति। [३]

---

१. व्यासश्चात । देवान् एकैकं ऋषीन् द्वौ द्वौ पितृंस्त्रींस्त्रीन् । अन्जलीन् दद्यात् ।

२. अथवा 'अर्हन्ति पितरस्त्रींस्त्रीन्' इत्येव युक्तः पाठः ।

३. तत्रैव - कृतस्वाध्यायः प्रथमं तर्पयेच्चाथ देवताः।
जान्वाच्य दक्षिणां दर्भैः प्रागग्रैः सयवैस्तिलैः ।।

अत्र देवादितर्पणे देवादिनाम्नामेव मन्त्रत्वात् कर्मावृत्तौ मन्त्रावृत्तेरावश्यकत्वात् । ऋषितर्पणे 'शतर्चिनस्तृप्यन्तु शतर्चिनस्तृप्यन्तु' इत्यादि प्रकारेण द्विवारं ऋषिनाम ग्राह्यम् । एवं पितृतर्पणे पितृनाम त्रिवारं ग्राह्यम् ।

अनामिक्यां हेम धृत्वा तर्जन्यां रौप्यमेव च ।
जलदर्भैः स्वधा मन्त्रैर्गोत्रनामतिलैर्भवेत् ।।
ताम्रगोकर्णपात्रेण तर्पयेदन्यथा वृथा ।
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।।
शालग्रामशिलातीर्थयुक्तेनैव जलेन तु ।
देवादितर्पणं कुर्यादन्यथा निष्फलं भवेत्।।

- इति ।।

विना तीर्थेन यः कुर्यात्तर्पणं पितृदेवताः ।
रेतोमूत्रपुरीषांश्च स पितृभ्यः प्रयच्छति ।।

---

एकैकाञ्जलिदानेन प्रकृतिस्थोपवीतकः ।
समजानुद्वयो ब्रह्मसूत्रहार उदङ्मुखः ।।
तिर्यग्दर्भैश्च वामाग्रैर्यवैस्तिलैर्विमिश्रितैः ।
अम्भोभिरुत्तराक्षिप्तैः कनिष्ठामूलनिर्गतैः ।।
द्वाभ्यां द्वाभ्यामंजलिभ्यां मनुष्यांस्तर्पयेत्ततः ।
दक्षिणाभिमुखः सव्यं जान्वाच्य द्विगुणैः कुशैः ।।
तिलैर्जलैश्च देशिन्या मूलदर्भाद्विनिसृतैः ।।
दक्षिणांसोपवीती स्यात्क्रमेणांजलिभिस्त्रिभिः ।
सन्तर्पयेद्दिव्यपितॄंस्तत्परांश्च पितॄन् स्वकान् ।। इत्यादि ।

शालग्रामशिलातोयैस्तर्पयेत्पितृदेवताः ।
अमृतेन समं भूत्वा नित्यतृप्ता न संशयः ।।

सव्येन पाणिना वामहस्तेन अन्वारब्धेन वा स्पृष्टेन वा दक्षिणेन पाणिना तर्पणं कुर्यादित्यन्वयः। इदं तु ऋग्वेदिनाम् । यजुर्वेदिनां तु अञ्जलिना तर्पणमुक्तम् -

कुशाग्रैश्चैव देवानामृषीणां कुशमध्यतः ।
पितृणामग्रमूलाभ्यां कुर्यात्तर्पणमञ्जसा ।।
उपवीती देवताश्च निवीती तर्पयेदृषीन् ।
अपसव्येन तु पितृन् विभक्त्या तु द्वितीयया [१]।।

- इति ।

पितृणां तिलतर्पणे विशेषमाह योगयाज्ञवल्क्यः -

ये च पाणिस्थले स्पृष्टा रोमकूपे तु ये धृताः ।
तैस्तिलैस्तर्पणं कुर्वन् पितृघाती भवेद् द्विजः ।।
तस्मात्ते मणिबन्धे तु धार्या विप्रैस्समाहितैः ।
जलस्थस्तु जले कुर्यात्तर्पणं स्थलगः स्थले ।।

तर्पणं पितृतर्पणम् ।

वामपादं जले कृत्वा दक्षपादं स्थले तथा ।।

हारीतः -

वसित्वा वसनं शुष्कं स्थले विस्तीर्णबर्हिषि ।
देवादितर्पणं कुर्यान्न पात्रे नोदके तथा ।।

---

१. विभक्त्या तु द्वितीययेति । इदं तु सामान्येन यदाण्यन्तस्तर्पयामीति प्रयोगस्तदेव। गतिबुद्धिप्रत्यवसानार्थेत्यादिना । अतो न तावत्प्रजापतिस्तृप्यत्वित्यत्रेति बोध्यम् ।

हेमरूप्यमयं [1]पात्रं ताम्रकस्य समुद्भवम् ।
देवादितर्पणे ग्राह्यं मृन्मयं तु परित्यजेत् ।।
मार्जनं तर्पणं श्राद्धं न कुर्याद्वारिधारया ।।

- इति ।

रवौ शुक्रे त्रयोदश्यां सप्तम्यां निशि सन्ध्ययोः ।
नन्दासु जन्मदिवसे मघायां भौमवासरे ।
भृत्यपुत्रकलत्रार्थं न कुर्यात्तिलतर्पणम् ।।

- इति ।

तर्पयेत्प्राङ्मुखो देवान् ऋषींश्चोदङ्मुखो पितृन् ।
दक्षिणाभिमुखश्चैवं तर्पणस्य विधिः स्मृतः ।।
विवाहे चोपनयने चौले सति यथाक्रमम् ।
वर्षमर्धं तदर्धं च नेत्येके तिलतर्पणम् ।। - इति ।

अस्यापवादः -

विवाहे पातसंक्रान्तौ ग्रस्ते शशिनि भास्करे ।
नैव वारादिदोषोऽस्ति मन्वादिषु युगादिषु ।।

विवाहे । विवाहमुञ्जीचौलेषु जातेष्वित्यर्थः।

अङ्गुल्यग्रैस्तथा देवान् कनिष्ठामूलतो ऋषीन् ।
पितृन् दिव्यानदिव्यांश्च तर्जन्यङ्गुष्ठमध्यतः ।।
तत्र दिव्याः स्वसूत्रोक्ता अदिव्या जनकादयः ।।

- इति स्कान्दे ।

---

१. हेमरूप्यमयमिति । ताम्रकस्येति संबन्धसामान्ये षष्ठी ।

जनकादयः पितरस्तु कालतरङ्गे महालयप्रसङ्गे [१] उक्ताः। त एव तर्पणे ज्ञेयाः। देवदेवर्षिदिव्यपितरस्तु स्वस्वगृह्यसूत्रोक्ता ज्ञेयाः। यद्यप्याश्वलायनसूत्रे देवतातर्पणे देवतास्तर्पयन्ति । प्रजापतिर्ब्रह्मेत्येवोक्तेः। अग्निविष्णोरनुक्तावपि शौनकस्मृतौ तयोरुक्तेः। तर्पणकाले आदौ तौ गृह्येते । ऋषितर्पणेऽपि सूत्रे सनकादीनां अनुक्तावपि ।

मत्स्यपुराणे -

सनकश्च सनन्दश्च तृतीयस्तु सनातनः ।
कपिलश्चासुरिश्चैव वोढुः[२] पंचशिखस्तथा ।।
सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुनाखिलाः ।।

इत्युक्तेः ऋषितर्पणं गृह्यते ।।

पितृतर्पणे स्वसम्बन्धादिकं च ग्राह्यम् ।

सम्बन्धनामगोत्राणि तथा वस्वादिरूपताम् ।
स्वधाशब्दं नमःशब्दमुक्त्वा सन्तर्पयेत् पितृन् ।।

- इति बोधायनोक्तेः।

प्रपितामहे तु निर्दिष्टो वासुदेवो परः पुमान् ।
पितामहे तु निर्दिष्टस्तथा संकर्षणः प्रभुः ।।
पितृसंस्थस्तु विज्ञेयः प्रद्युम्नो ह्यपराजितः ।।

- इति विष्णुधर्मोत्तरे ।

पित्राद्यन्तर्यामिवस्वाद्यन्तर्यामित्वेन प्रद्युम्नादीनां ग्रहणमुक्तम् ।।

---

१. अस्मिन् पुस्तके महालयप्रसंगे ८८ तमे जृष्टे ताताम्बेत्यादिना ।

२. 'वोटः पञ्चशिखस्तथा' इत्यप्येकस्मिन् पुस्तके ।

स्नानमज्जनपूर्वं तु क्वचित्कर्तुं न शक्यते ।
तत्रादौ ब्रह्मयज्ञार्थं मन्त्रस्नानं विधीयते ।।
पुण्यकालनिमित्तं तु केवलं तर्पणं स्मृतम् ।।

देवर्षितर्पणं स्मृतमिति वा पाठः। प्रातःकाले ब्रह्मयज्ञादिकृते सति मध्ये संक्रमणादिपुण्यकाले प्राप्ते सति तन्निमित्तं पुनस्तर्पणमात्रं कार्यम् । न ब्रह्मयज्ञादि कार्यमित्यर्थः।

तथा स्मृत्यन्तरं -

नैमित्तिकं तर्पणं तु कुर्याद्रात्रावपि द्विजः ।
तीर्थांतरे तु तद्वत्स्यादेकमप्यत्र सद्भवेत् ।।
नैमित्तिकं तर्पणं तु ब्रह्मयज्ञं तु बह्वृचः ।
रात्रौ प्रहरपर्यन्तं दिवाकर्म तु कारयेत् ।।
विना सौरं ब्रह्मयज्ञं न कृतानि दिवा यदि ।।

- इति ।

श्राद्धाङ्गतर्पणं [१]यामे प्रथमे मधु तद्भवेत् ।
पयो नारं च रुधिरं क्रमाद्यामेषु च त्रिषु ।।
श्राद्धात्पूर्वं ब्रह्मयज्ञं न कुर्यात्तर्पणं तथा ।
पित्रोः श्राद्धानन्तरं तु द्वयं कुर्याच्च बह्वृचः ।।

तर्पणे पवित्रमाह सुमन्तुः -

समूलाग्रौ विना गर्भौ कुशौ द्वौ दक्षिणे करे ।

---

१. श्राद्धाङ्गतर्पणमिति। मधु मद्यम् । नारं तस्येदमित्यण् पयोविशेषणमेतत्। रुधिरं शोणितम् । तैः कृते तर्पणे यत्पातकं तत्प्राप्नोतीत्यर्थः।

तथा सव्ये द्विजः त्रीन् [१]वै बिभृयात्सर्वकर्मसु ।।

बोधायनः -

हस्तयोरुभयोर्द्वौद्वौ बिभृयादासनेऽपि च ।। - इति ।

व्यासः -

तर्पणादीनि कार्याणि पितॄणां यानि कानिचित् ।
तानि स्युर्द्विगुणैर्दर्भैः सत्पवित्रैर्विशेषतः [२]।।

- इति ।

इदं तु सुवर्णपवित्राभावे तस्मिन् सति तु विशेषफलप्रदं च ।

काशहस्तस्तु नाचामेत् कदाचिद्विधिशंकया ।
प्रायश्चित्तेन युज्येत दूर्वाहस्तस्तथैव च ।।

- इति व्यासस्मृतिः।

लघुहारीतः -

पथि दर्भाश्चितौ दर्भाः ये दर्भा यज्ञभूमिषु ।
तर्पणासनपिण्डेषु षड्दर्भान् परिवर्जयेत् ।।
मासे नभस्यमावास्यां गृहीताश्चेद् द्विजैर्यदा ।
अयातयामास्ते दर्भा नियोज्यास्तु पुनःपुनः ।। - इति ।

नभसि श्रावणे मासि पुनःपुनर्नियोज्याः। पूर्वं स्नानतर्पणादौ ये गृहीताः। त एव पुनर्द्वितीयस्नानादौ ग्राह्या इत्यर्थः।

शातातपः -

जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।

---

१. द्विजः त्रीन् दर्भान् बिभृयादित्यन्वयः।

२. सप्तपत्रैरित्यन्त्र पुस्तकेषु ।

अनामिक्यां हेम धार्यं तर्जन्यां रौप्यमेव च ।।
न रूप्यं केवलं धार्यं दैवे पित्रे च कर्मणि ।। - इति ।

## कुशपवित्रग्रन्थिलक्षिणं तु -

चतुरङ्गुलमग्रं च ग्रन्थिरेकाङ्गुलिर्भवेत् ।
द्व्यङ्गुलं रज्जुवलयं पवित्रस्य तु लक्षणम् ।।
यज्ञोपवीतमौंजास्तु तथा कुशपवित्रके ।
ब्रह्मग्रन्थिर्विजानीयादन्यत्र च यथारुचि ।।

ब्रह्मग्रन्थिस्तु पवित्रग्रन्थिः।

प्रथमं लङ्घयेत्पर्वं द्वितीयं नैव लङ्घयेत् ।
तयोस्तु पर्वयोर्मध्ये पवित्रं धारयेद् द्विजः ।।
कूर्चेण वा पवित्रेण येन कर्माणि कारयेत् ।
तस्य ग्रन्थिं विसृज्यैव कर्मान्ते तत्त्यजेत् द्विजः ।।
अग्रेऽङ्गुल्याः स्थितो दर्भस्तपोवृद्धिकरो मतः ।
मध्ये प्रजाकामकरो मूले सर्वार्थसाधकः ।।
एवं हि फलभेदास्तु स्थानभेदेन धारणात् ।
जपकर्महरा ये वै अदर्भा [१] असुरास्तु ते ।।
सपवित्रं द्विजं दृष्ट्वा विद्रवन्ति दिशो दश ।
ब्रह्मयज्ञे जपे तस्मात्पवित्रं धारयेद् द्विजः ।।

इति पवित्रप्रकरणम् ।।

---

१ अदर्भा अपवित्रा इत्यर्थः। अव्यक्ता इत्यन्यत्र पुस्तके।

देवर्षिपितृतर्पणानन्तरं संक्षेपतः **सर्वतर्पणमुक्तं** विष्णुपुराणे -

आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति ब्रुवन् ।
क्षिपेत्तिलोदकं भूमौ कुर्वन् संक्षेपतर्पणम् ।। - इति ।

तर्पणानन्तरं **वस्त्रनिष्पीडनमाह** योगयाज्ञवल्क्यः -

यावद्देवानृषींश्चैव पितृंश्चापि प्रतर्पयेत् ।
तावन्निष्पीडयेद्वस्त्रं येन स्नातो भवेद् द्विजः ।।

येन परिधानवस्त्रेणेत्यर्थः।

वस्त्रं निष्पीडयेद्भूमौ न द्वादश्यां न संक्रमे ।
चतुर्दश्यां श्राद्धदिने न च क्षारेण योजयेत् ।।

**जीवत्पितृकस्य तर्पणे** विशेषः -

कव्यवाहोऽनलः सोमो यमश्चैवार्यमा तथा ।
अग्निष्वात्ता बर्हिषदः सोमपा आज्यपास्तथा ।।
सपदि स्याज्जीवत्पितृकः एभ्यो दद्याज्जलाञ्जलिम् ।।- इति ।

निष्पीडनानन्तरं वस्त्रप्रसारणम् । 'तर्पयित्वा निपीड्याथ वासो विस्तृत्ये'त्याचार्योक्तेः ।

प्रागग्रमुदगग्रं वा धौतं वासः प्रसारयेत् ।
दक्षिणाग्रं [१] पश्चिमाग्रं चेत्पुनः क्षालने [२] भवेत् ।।

इति तर्पणप्रकरणम् ।।

---

१. दक्षिणाग्रं । दक्षिणायां दिशि अग्राणि दशाः यस्य तत् वस्त्रं । तथैव पश्चिमाग्रमित्यत्र ।

२. क्षालने । अर्हमिति शेषः । क्षालनीयमित्यर्थः ।

## ।। अथ जपः ।।

तस्य स्थानविशेषः -

गृहे त्वेकगुणः प्रोक्तो गोष्ठे शतगुणो भवेत् ।
सहस्रं पुण्यतीर्थेषु ह्यनन्तं विष्णुसन्निधौ ।।
विष्णोस्तु पूर्वदिग्भागे जपो ह्यायुष्यवर्धनः ।
दक्षिणे ज्ञानदः स स्यात्पश्चिमे मोक्षसाधनः ।।
लक्ष्मीप्रदश्चोत्तरे स्याद्देवाग्रे सर्वसिद्धिदः ।।

- इति स्मृत्यन्तरे ।

## ।। अथासनम् ।।

तच्च बाह्यशरीरभेदात् द्विविधम् ।

कुशासने[३] दुःखनाशं कम्बले दुःखमोचनम् ।
व्याघ्रकृष्णाजिने ज्ञानसिद्धिरायुः प्रजायते ।।
भूमिकाष्ठतृणादीनामासनं परिवर्जयेत् ।।

- इति ।

विशेषस्तु -

आसनं तु जपे ध्याने चैलाजिनकुशोत्तरम् ।

चैलाजिने इत्यस्यार्थः। भूमौ कुशासनं प्रस्थाप्य तदुपरि व्याघ्रचर्मादि तदुपरि वस्त्रमिति कम्बलादिवस्त्रमिति बाह्यासनम् ।

---

३. पुष्पासने इत्यपरेषु पुस्तकेषु । कुशासने इति । कुशासन इत्येव युक्तः पाठः। अग्रे च भूमौ कुशासनमित्युक्तः।

शारीरं [१] त्रेधा पद्मस्वस्तिकवीरभेदेनोक्तं पञ्चरात्रे -

उर्वोरुपरि [२] सन्न्यस्य सम्यक् पादतले शुभे ।
पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ।।
उर्वोरधस्तात्सम्यक्च कृत्वा पादतले उभे ।
ऋजुकामो विशेद्योगी [३] स्वस्तिकं तत्प्रचक्षते ।।
एकपादमधः कृत्वा विन्यस्योरौ तथोत्तरम् ।
ऋजुकायो विशेद्योगी वीरासनमितीरितम् ।।

## ।। अथ जपमाला ।।

हस्तेन वा मालया वा गायत्रीजपमाचरेत् ।
वेदमाता तु गायत्री वेदः पर्वसु गीयते ।।
तस्माज्जपेच्च गायत्रीं पर्वभिर्द्विजसत्तम ।।

- इति ।

उक्तः सन्ध्यावन्दनगायत्रीजपः हस्तपर्वभिः शिष्टैः क्रियते । अष्टमहामन्त्रान्तर्गतगायत्रीजपस्तु जपमालया ।

अक्षास्थिमात्रा मणयः श्रेष्ठाः स्युर्जपकर्मणि ।
धात्रीफलास्थिमात्रा तु मध्यमा कमलासना ।
बदर्यस्थि [४] प्रमाणास्तु कनिष्ठा मणयः स्मृताः ।।

---

१. शारीरं शरीरसम्बन्धि आसनमित्यनुवर्तते ।

२. उर्वोरुपरीति जानोरुपरिभागे ।

३. विशेद्योगी तिष्ठेदित्यर्थः ।

४. बदर्यस्थि बदरीफलान्तर्गतबीजं । द्रष्टव्यमनुपदमेव ।

अक्षास्थिमाला रुद्राक्षपरिमाणा इति केचित् । कमलबीजमध्य-गर्भप्रमाणा इति गुरवः । एवमुत्तरत्रास्थिशब्देन बीजं ग्राह्यम् ।

स्वर्गापवर्गदा माला रजतस्वर्णरत्नजा ।
श्वेतपद्माक्षमालाभिर्जपस्य ह्यमितं फलम् ।।
तुलस्यास्तु फलं नालं वक्तुं शेषोऽपि तत्त्वतः ।
तुलसीकाष्ठमणिभिः कृता या जपमालिका ।।
गायत्र्यादिजपः प्रोक्तः कृतोऽभीष्टप्रदायकः ।। - इति ।
अष्टोत्तरं शतं संख्या मणीनां श्रेयसी भवेत् ।
तदर्धं मध्यमा प्रोक्ता अधमा सप्तविंशतिः ।।

अत्र फलम् -

त्रिंशदक्षकृता माला जयदा जपकर्मणि ।
अष्टाविंशतिसंख्याकैरक्षैः पुष्टिस्सदा भवेत् ।।
पंचविंशतिसंख्याकैः कृता मुक्तिं प्रयच्छति ।
मणींस्तु क्षालयेत्पंचगव्यैर्वेदान्तविद्यया ।।
आरोपयेत्क्षौमसूत्रे शाणकेशादिवर्जिते ।
कार्पासे राजते स्वर्णे सूत्रे प्रोता प्रशोधिताः।।
पृष्ठेन पृष्ठभागे च मुखभागे मुखेन च ।
सम्बन्धात्सूक्ष्ममणिभिर्मध्ये मध्ये च सान्तरम् ।।
कृत्वा तु कटकाकारं तत्सूत्रे तु मणिं न्यसेत्[1]।
मेरुं तदुपरि न्यस्य मणिं तदुपरि न्यसेत् ।।

---

१. करं कृत्वेत्यन्यत्र पाठः । मणिं न्यसेदित्यन्यत्र ।

**स्मृत्यन्तरे ।। जपमाला प्रत्युक्ता -**

तत्र पुण्याहं वाचयित्वा । तत्र देवस्याग्रे गोमयेनोपलिप्य । रङ्गवल्यादि पद्मं विलिख्य । तत्र चक्राब्जं विलिख्य । तिल-तण्डुलशालीन् प्रस्थाप्य तत्र कुशं नववस्त्रोपरि मालां स्थाप्य । नववस्त्रेणाच्छाद्य । तत्समीपे वा कुण्डे वा स्थण्डिले वाऽग्निं प्रतिष्ठाप्य । अग्नौ परशुरामं ध्यात्वा । पापपुरुषदहनशोषणादिकं कृत्वा । तत्त्वन्यासादि कृत्वा । पीठावरणदेवतापूजां कृत्वा । नारायणाष्टाक्षरमन्त्रदेवतादिध्यानं कृत्वा । तत्राग्निपुरुषे बद्धाञ्जलौ मेघश्यामं चतुर्भुजं वरदाभयहस्तकं अक्षमालां च बिभ्राणं जनार्दनं यज्ञपुरुषं ध्यात्वा समिच्चरुघृतैरष्टाक्षरादिमन्त्रैश्च प्रत्येकमष्टोत्तरशतं जुहुयात् ।

अथ मालां ततः शुद्धां शालिग्रामसमर्पिताम् ।
अष्टाक्षरादिमन्त्रैस्तु मन्त्रितां गुरुहस्ततः ।।
गृहीत्वा कुंकुमाक्रान्तां प्रणम्य जपमाचरेत् ।
मध्यमानामिकाङ्गुष्ठैर्जपेन्नान्यैः कदाचन ।।
तर्जन्या न स्पृशेन्मालां कनिष्ठेन कदाचन ।
जपमाला प्रगोप्तव्या जपकाले सुमेधसा ।।
परदृष्टिकृता माला निष्फला जपकर्मणि ।
अक्षमाला प्रगोप्तव्या गुरोरपि न दर्शयेत् ।।
पाते तु जपमालाया मेरोरुल्लङ्घने सति ।
प्राणायामत्रयं कृत्वा धृत्वाऽऽपोशनमाचरेत् ।।
अप्रतिष्ठितमाला या तज्जपो निष्फलो भवेत् ।

न वामेन स्पृशेन्मालां करेण ब्राह्मणः क्वचित् ।।
करे कण्ठेऽथवाऽङ्गुल्यां धारयेन्न कदाचन ।।
- इति ब्रह्मतर्के ।

नान्याङ्गुलिभिराकर्षेन्न नखैश्च तथा स्पृशेत् ।
मध्याङ्गुल्याकर्षणं स्यात् सर्वसिद्धिप्रदायकम् ।।
मुखमारभ्य पृष्ठान्तं जप्त्वा मेरोः प्रदक्षिणम् ।
भ्रामयित्वा पुनर्वक्त्रं प्रारभ्य जपमाचरेत् ।।
- इत्यपि ब्रह्मतर्के ।

जपमालाभावे पर्वभिः जपमाह नारदः -

मध्यामानामिकामध्यं पर्व मेरुतया कृतम् ।
आरभ्या [१]नामिकामूलं प्रदक्षिणतया जपेत् ।।
मध्यमामूलपर्यन्तं गणयेद्दशपर्वसु ।। - इति ।

शौनकः -

प्रातर्नाभ्यां करे [२] तत्र मध्याह्ने हृदि संस्थिते ।
सायाह्ने मुखमध्ये च गायत्रीजपमुत्तमम् ।।

अथ वा -

कृत्वोत्तानौ करौ प्रातः सायं चाधोमुखौ करौ ।

---

१. आरभ्येति । प्रथममनामिकामूलमारभ्य जपारम्भं कृत्वा कनिष्ठांगुलिपर्वभिश्च अनामिका क्रमेण मध्यमाग्रेण तर्जन्यग्रमध्यमूलपर्वभिश्च मध्यममूलपर्यन्तं गणयित्वा पुनश्च तत्रैवारभ्य तर्जनीमूलपर्वमध्याग्रपर्वभिः मध्यमानामिकाग्रकनिष्ठाग्रमध्यमूलानामिकामूलपर्वभिराकलय्य पुनः प्रदक्षिणया पूर्ववद्गणनीयमित्यर्थ इति केचित् ।

२. करे कृत्वेत्यत्र पाठः ।

मध्ये स्कन्धभुजाभ्यां तु जप एवमुदाहृतः ।।

भुजयोः स्कन्धयोर्वा करौ मध्ये कृत्वा जपः कार्य इत्यर्थः ।

अङ्गुलीर्न वियुज्येत किंचिदाकुञ्चितौ करौ ।
अङ्गुलीनां वियोगे तु छिद्रेषु स्रवते जपः ।।
अधोहस्तस्तु पैशाचो मध्यहस्तस्तु राक्षसः।
बद्धहस्तस्तु गन्धर्वो ऊर्ध्वहस्तस्तु दैवतः ।।

- इति ।

अधोहस्तः नाभेरधः कृतः पैशाचः पिशाचानां फलप्रद इत्यर्थः। एवमुत्तरत्रापि ।

मनः प्रहर्षणं [१] शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनालस्यं जपसम्पत्तिहेतवः ।।
होमं प्रतिग्रहं दानं भोजनाचमने जपम् ।
बहिर्जानुर्न [२] कुर्वीत साङ्गुष्ठस्तु समाचरेत् ।।
निष्ठीवे [३] जृम्भणे क्रोधे निद्रालस्ये क्षुते मदे ।
पतितस्यांत्यजालोके [४] दशस्वेतेषु चाऽचमेत् ।।

---

१. मनः प्रहर्षणमिति मनोहर्षता । प्रकर्षणमित्यन्यत्र । मनःप्रकर्षणमिति पाठे मनः-संयमनं इत्यर्थः।

२. बहिर्जानुः। जान्वोर्बहिर्हस्तौ कृत्वेत्यर्थः ।

३. निष्ठीवे मुखेन श्लेष्मोत्सर्गे ।

४. पतितस्य दर्शने अन्त्यजस्य चेत्यर्थः।

छेदने भेदने चैव पैतृके [१]रौद्ररक्षसि ।
आत्माभिमर्शने चैव निरस्याप उपस्पृशेत् ।।
अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा ।
प्रलपन् यो जपेद्यावत्तावन्निष्फलतामियात् ।।
श्वशूद्रपतितादींश्च वराहं च रजस्वलाम् ।
दृष्ट्वा तोयमुपस्पृश्य स्पृष्ट्वा स्नानं समाचरेत् [२]।।
स्नानभोजनयोर्होमे जपे वै दन्तधावने ।
पुरीषमूत्रोत्सर्गे च सप्त मौनं विधीयते ।।
जपादौ क्रियमाणे तु यद्यागच्छेत् द्विजोत्तमः ।
अभिवाद्य च तं विप्रं योगक्षेमं प्रकीर्तयेत् ।।
आचार्यं विष्णुभक्तं च भगवन्मन्दिरं जलम् ।
अश्वत्थमग्निमर्कं च पृष्ठीकृत्य जपेन्न तु ।।

छिन्नापादा तु गायत्री ब्रह्महत्याविनाशिनी ।
अच्छिन्नपादा गायत्री ब्रह्महत्यां प्रयच्छति ।।
तस्मात्पादत्रयं छित्वा जपयज्ञं समाचरेत् ।।
सम्पुटैकषडोंकारगायत्री त्रिविधा मता ।
तत्रैकप्रणवा ग्राह्या गृहस्थैर्ब्रह्मचारिभिः ।।

---

१. पैतृके रौद्ररक्षसीत्येव पाठः ।

२. स्नानं समाचरेत् ।
अश्वारूढं यतिं दृष्ट्वा खट्वारूढां रजस्वलाम् ।
सकेशां विधवां नारीं सचैलं स्नानमारेत् ।। -इत्यपि ।

गृहस्थो ब्रह्मचारी च प्रणवाद्यामिमां जपेत् ।
अन्ते यः प्रणवं कुर्यान्नासौ वृद्धिमवाप्नुयात् ।।
सम्पुटां च षडोंकारां गायत्रीं च जपेद्यतिः ।।

एकोंकारां गायत्रीमाह व्यासः -

पूर्वोंकारव्याहृतियुक् गायत्री त्वेकतारका ।। - इति।

एकतारका एकोंकारयुक्तेत्यर्थः।

सम्पुटामाह योगयाज्ञवल्क्यः -

ओंकारं पूर्वमुच्चार्य भूर्भुवःस्वस्तथैव च ।
गायत्रीं प्रणवं चान्ते गायत्री सम्पुटा मता ।। - इति ।

मनुः षडोंकारमाह -

तिस्रो व्याहृतयः पूर्वं पृथगोंकारसंयुताः ।
पूर्वं पुनर्व्याहृतीनां मन्त्रस्याद्यन्तयोस्तथा ।
एतया जप्तया नित्यं वाङ्मयं जपितं भवेत् ।।

- इति ।

अस्यायं भावः। प्रथमतः एकं ओंकारं उच्चार्य ततः पृथक्प्रणव-सहितव्याहृतित्रयमुच्चार्य ततः सप्रणवगायत्रीं चोच्चार्यान्तेऽपि प्रणवमुच्चारयेत् इति ।

तथा चायं मन्त्रोच्चारप्रकारः -

ओं ओंभूः ओंभुवः ओंस्वः ओंतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ओं ।।

कुशहस्तेन जपकरणे फलमाह हारीतः -

कुशहस्तेन यज्जप्तं दानं चैव कुशैः सह ।
कुशहस्तस्तु यो भुङ्क्ते पुण्यं तस्य न गण्यते ।।
कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ।
कुशाग्रे शंकरं विद्यात् त्रयो देवा व्यवस्थिताः ।।
- इति ।

## शिखाबन्धनमाह -

स्मृत्वोंकारं तु गायत्रीं निबध्नीयाच्छिखां द्विजः ।
पुनराचम्य हृदयं बाहू स्कन्धौ च संस्पृशेत् ।।
- इति व्यासः।

इदं शिखाबन्धनं सर्वकर्मविषयम् ।

यज्ञोपवीतलक्षणमाह मनुः -

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्वं वृतं त्रिवृत् ।
त्रिवृदूर्ध्वं वृतं कार्यं तन्तुत्रयमधोवृतम् ।।
त्रिवृतं चोपवीतं स्यात्तत्रैको ग्रन्थिरिष्यते ।
नाभेरूर्ध्वमनायुष्यमधो नाभेस्तपःक्षयः ।।
तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः ।।

तत्रैको ग्रन्थिः पवित्रग्रन्थिः।

त्रिषु च्छिन्नमधःपातमनध्यायकृतं च यत् ।
कृतं चाशुचिना यत्स्याद्भुक्त्वा निर्मितमुत्सृजेत् ।।
सावित्र्या दशकृत्वोद्भिर्मन्त्रितैस्तत्तु क्षालयेत् ।

ओंकारः साग्निको गौश्च सोमः पितृप्रजापती ।।
वायुः सूर्यः सर्वदेवास्तत्राहुर्देवताः सदा ।
देवेऽर्पितं ब्रह्मसूत्रं धारयेन्मन्त्रतः शुचिः।।

मन्त्रस्तु -

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ।।
स्तनादूर्ध्वमधोनाभेस्तन्न धार्यं कदाचन ।।

- इति ।

अपृष्ठवंशनाभ्यं तु यावद्वै विन्दते कटिम् ।
यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।।
वस्त्राभावे तृतीयं तु गृहस्थो धारयेत् द्विजः ।
चतुर्थमुत्तरीयार्थमायुष्कामो बहून्यपि ।।
गृहस्थस्य त्विदं प्रोक्तमेकं वै ब्रह्मचारिणः ।

उपवीतमलंकारं स्त्रजं कनकमेव च ।
उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।।
मेखलामजिनं दण्डं उपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि धार्याण्यन्यानि मन्त्रतः ।।

- इति ।

## ।। अथ जपप्रकारः ।।

उपवेशनस्थानादधस्तात् परमपुरुषं आधारशक्तिं कूर्मं मण्डूकं कालाग्निरुद्रं वज्रं अनन्तं वराहं पृथिवीं नमेत् ।

तत्र मन्त्रः -

ओं आधाररूपिण्यै शक्त्यै नमः। ओं कुं कूर्माय नमः [१]। ओं मं मण्डूकाय नमः । ओं कं कालाग्निरुद्राय नमः । ओं वं वज्राय नमः। ओं अं अनन्ताय नमः। ओं वं वराहाय नमः। ओं पं पृथिव्यै नमः ।। कुशादि बाह्यासने ।

पद्मादिशरीरासनेनोपविश्य प्राङ्मुखो वा उदङ्मुखो वा अग्निगोविप्रसमीपे तन्मुखः मन्त्रपूर्वकमुपविशेत् ।

तत्र मन्त्रः -

पृथिवीति मन्त्रस्य मेरुपृष्ठ ऋषिः। पृथिवी देवता सुतलं छन्दः उपवेशने विनियोगः ।

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।

त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।।

ततः नारसिंहसुदर्शनात्मकं अष्टदलचक्रं ध्यात्वा । चक्रमुद्रया तेन चक्रेण बध्नामि। ऐन्द्रादिदिक्षु । नमश्चक्राय स्वाहा । अस्त्राय फट्। इति दिग्बन्धः । इति मन्त्रेण अष्टदिक्षु स्थितान् भूतान् उच्चाट्य दिग्बन्धनं कुर्यात् ।

---

१. ओं कुं कूर्माय नम इति। अत्र कूर्माय कुं नमः इति केचित् । तेषां मते 'कुं नमः' 'मं नमः' इत्यादिमन्त्राः। प्रकृतौ तु 'कुम्' 'मम्' इत्यादयः। उपरितनं तन्त्रसारे स्पष्टम्।

ततः -

अपसर्पन्तु ये भूता ये भूता भुवि संस्थिताः ।
तेषामप्यविरोधेन ब्रह्मकर्म समारभेत् ।।

- इति ।

देवं प्रार्थ्य करशुद्ध्योः प्रागूर्ध्वं वा नमनं कुर्यात् ।

तत्क्रमस्तन्त्रसारे -

स्मृत्वा गुरुं पूर्वगुरुमादिमूलगुरुं तथा ।
देवतां वासुदेवं च विद्याभ्यासी तु सिद्धिभाक् ।।

अस्यार्थः -

गुरुं सद्विद्योपदेष्टारं सन्मन्त्रोपदेष्टारं वा पूर्वगुरुं गुरोर्गुरुं आदिगुरुं आनन्दतीर्थनामकं मूलगुरुं । मूलसप्तदेवतां तत्तद्विद्याप्रतिपाद्यां । ततः वासुदेवं स्मरेदिति ।

मूलगुरवश्चोक्ताः पंचरात्रे -

व्यासं च भारतीं वाणीं विधिं वायुं रमां तथा ।
ततो नारायणं मूलगुरूनाहुर्विपश्चितः ।।

- इति ।

एवं च द्वादशनमस्काराः भवन्ति । तत्क्रमः ।

गुरुभ्योनमः ।।१।। परमगुरुभ्योनमः ।।२।। श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ।।३।। वेदव्यासाय नमः ।।४।। भारत्यै नमः ।।५।। सरस्वत्यै नमः ।।६।। वायवे नमः ।।७।। ब्रह्मणे नमः ।।८।। लक्ष्म्यै नमः ।।९।। नारायणाय नमः ।।१० ।। हरये नमः ।।११।। वासुदेवाय नमः ।।१२।।

ब्रह्महत्या....कुक्षौ [1] पापं विचिन्तयेदिति ।

पापपुरुषं ध्यात्वा तं च नाभिदेशमानीय नाभौ षट्कोणमण्डल-मध्यस्थो नीलवर्णो वायुबीजवाच्यः शङ्खचक्रगदायुधः। प्रद्युम्नो भगवान् मच्छरीरस्थं पापपुरुषं वायुना शोषयेदित्युक्त्वा पूरकरीत्या वायुमापूर्य । 'ओं यं' इति वायुबीजं षड्वारं जप्त्वा तं शुष्कं भावयेत् । ततस्तं हृदयदेशमानीय । हृदये त्रिकोणमण्डलमध्यस्थो रक्तवर्णो अग्निस्थः शङ्खोऽब्जारिगदायुधः संकर्षणो भगवान् मच्छरीरस्थं पापपुरुषं अग्निना निर्दहेदित्युक्त्वा । 'ओं रं' इति वह्निबीजं द्वादशवारं जप्त्वा तं दग्धं ध्यात्वा । तद्भस्म वामनासा-पुटेन रेचकप्रकारेण बहिर्निक्षिपेत् ।

ततः शिरसि वर्तुलमण्डलमध्यस्थः भगवान् श्वेतवर्णो वरुणस्थो वरुणबीजवाच्यः शङ्खचक्रपद्मगदायुधधरः श्रीवासुदेवो भगवान् मच्छरीरं आपादतलमस्तकं वरुणेन अमृतवृष्ट्या आप्लावयेत् इत्युक्त्वा । 'ओं वं' इति चतुर्विंशतिवारं कुम्भकरीत्या जपेत् ।।

---

१. ब्रह्मबहत्या ... कुक्षौ इत्यादि ।

ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
तत्संयोगपदद्वन्द्वमंगप्रत्यंगपातकम् ।।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ।
पिंगोर्ध्वकेशं दुर्गन्धं स्मरेत्प्रादेशमात्रकम् ।।
खड्गचर्मधरं कृष्णं कुक्षौ पापं विचिन्तयेत् ।। - इति ।

## ।। अथ करशुद्धिः ।।

मणिबन्धे प्रकोष्ठे च ........करशुद्धिरुदाहृता [१] ।

तत्र मन्त्रस्तु - यं रं वं इति बीजारक्षराणि तैरेव अस्त्राय फट् इति दिग्बन्धं वदेत् ।

**तत्वन्यासमातृकान्यासौ** सर्वमन्त्राणामुपकारकत्वादादौ कुर्यात् ।

वैष्णवेषु च मन्त्रेषु तत्वानां न्यासनं पुरा ।
ततस्तु मातृकान्यासं कुर्यादन्यत्र चान्यथा ।।

इति प्रमाणम् । अन्यत्र देवपूजादौ प्रतिमायां । अन्यथा मातृकान्यासं पूर्वं कृत्वा पश्चात्तत्वन्यासः ।

तत्क्रमः।। मूलेन प्राणानायम्य । ओं भूः अग्न्यात्मने अनिरुद्धाय हृदयाय नमः। ओं भुवः वाय्वात्मने प्रद्युम्नाय शिरसे स्वाहा । ओं स्वः सूर्यात्मने संकर्षणाय शिखायै वषट् । ओं भूर्भुवः स्वः प्राजापत्यात्मने श्रीवासुदेवाय कवचाय हुं । ओं सत्यात्मने नारायणाय अस्त्राय फडिति दिग्बन्धः। एतेषां तत्वमन्त्राणां अन्तर्यामि ऋषिः मूर्ध्नि । देवी गायत्री छन्दः मुखे । प्रधानादिरूपी नारायणो देवता इति हृदये न्यस्य ।

प्रधानोपमवर्णानि द्विभुजान्यप्यशेषतः।
कृताञ्जलिपुटान्येव प्रधानं तं हरिं प्रति ।।

---

१. मणिबन्धे करशुद्धिरित्यादि ।
मणिबन्धे प्रकोष्ठे च कूर्परे हस्तसन्धिषु ।
तत्पृष्ठपार्श्वयोश्चैव करशुद्धिरुदाहृता ।।

श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं तत्वन्यासं करिष्ये ।

तत्र द्वादशमूर्तीः मालाकारेण हृदये ध्यात्वा न्यसेत् । एवमग्रेऽपि न्यासो नाम तत्र तत्र ध्यानमेव । अत्र सर्वत्र नमः शब्दस्य आत्मने इत्यनेन तत्वाभिमानिदेवतान्तर्यामित्वादेकेनान्वयः। तत्रात्मपदं तत्वाभिमानिदेवतावाचि । तत्तदात्मपदं तदन्तर्यामिविष्णु वाचि । परायेति तु तस्य विशेषणं । अतः परशब्देन एकवचनमेव प्रयोक्तव्यम् । अभिमानिदेवतासु तत्तदनुसारेण एकवचनादिकम् ।

ओं पराय शक्त्यात्मने श्रीलक्ष्मीनारायणाय नमः ।।१।। ओं पराय प्रतिष्ठात्मने श्रीलक्ष्मी० ।।२।। ओं पराय संविदात्मने श्रीलक्ष्मी० ।।३।। ओं पराय स्फूर्त्यात्मने श्रीलक्ष्मी०।।४।। ओं पराय प्रकृत्यात्मने [१] श्रीलक्ष्मी० ।।५।। ओं पराय कालात्मने श्रीलक्ष्मी० ।।६।। ओं पराय पराय विद्यात्मने श्रीलक्ष्मी० ।।७।। ओं पराय मत्यात्मने श्रीलक्ष्मी० ।।८।। ओं पराय नियत्यात्मने श्रीलक्ष्मी०।।९।। ओं पराय मायात्मने श्रीलक्ष्मी० ।।१०।। ओं पराय कालात्मने श्रीलक्ष्मी०।।११।।ओं पराय पुरुषात्मने श्रीलक्ष्मी० ।।१२।।

वायुपुराणे लक्ष्मीनारायणौ कथितौ । अन्यत्र तु ब्रह्मवायू। तद्रीत्या ओं पराय पुरुषात्मने ब्रह्मवायुभ्यां नमः इति न्यासोऽपि ।

---

१. प्रवृत्यात्मने इति अन्यपुस्तके ।

दक्षिणबाहौ । ओं पराय अव्यक्तात्मने ब्रह्माणीभारतीभ्यां नमः।। वामबाहौ। ओं पराय महदात्मने ब्रह्मवायुभ्यां नमः।। दक्षिणपादे । ओं पराय अहंकारात्मने गरुडशेषरुद्रेभ्यो नमः।। वामपादे । ओं पराय मनआत्मने स्कन्देन्द्राभ्यां नमः।।

दक्षिणहस्ताङ्गुष्ठादिपंचाङ्गुलिषु ।। ओं पराय श्रोत्रात्मने दिग्देवताभ्यो नमः ।। ओं पराय त्वगात्मने प्राणाय नमः ।। ओं पराय चक्षुरात्मने सूर्याय नमः ।। ओं पराय जिह्वात्मने वलरुणाय नमः ।। ओं पराय घ्राणात्मने अश्विभ्यां नम इति ।।

वामहस्तज्येष्ठागुष्टादिपंचाङ्गुलिषु ।। ओं पराय वागात्मने वह्नये नमः ।। ओं पराय पाण्यात्मने दक्षाय नमः ।। ओं पराय पादात्मने जयन्ताय नमः ।। ओं पराय पाय्वात्मने मित्राय नमः ।। ओं पराय उपस्थात्मने मनवे नमः इति ।।

ततः दक्षिणपादाङ्गुष्टादिपंचाङ्गुलिषु ।। ओं पराय शब्दात्मने बृहस्पतिप्राणाभ्यां नमः ।। ओं पराय स्पर्शात्मने अपानाय नमः ।। ओं पराय रूपात्मने व्यानाय नमः ।। ओं पराय रसात्मने उदानाय नमः ।। ओं पराय गन्धात्मने समानाय नमः इति ।।

ततः वामपादांगुष्ठाद्यंगुलिषु ।। ओं पराय आकाशात्मने महागणपतये नमः । ओं पराय वाय्वात्मने प्रवहवायवे नमः ।। ओं तेज आत्मने अग्रये नमः ।। ओं पराय अबात्मने वरुणाय नमः ।। ओं पराय पृथिव्यात्मने शनैश्वरधराभ्यां नम इति ।।

## ।। अथ मातृकान्यासः ।।

यद्यप्यकाराद्यक्षराणामेकमात्रकत्वात् 'ओं अं नमः' । 'ओं आं नमः' इत्येव न्यासात्प्राप्तः । तथापि शिष्टाचारात् देवतासहित-न्यासस्य महाफलत्वात् स एव लिख्यते । तत्वन्यासोक्तप्रकारेण प्राणायामन्यासौ कृत्वा ।।

एतेषां मातृकामन्त्राणां अन्तर्यामि ऋषिः शिरसि । देवी गायत्री छन्दः मुखे। अजादिरूपी नारायणो देवता हृदये । न्यस्य।

उद्यद्भास्वत्समाभासश्चिदानन्दैकदेहवान् ।
चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ।।
लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ।।
सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् ।।
तादृग्रूपाश्च पंचाशत् ज्ञानमुद्राभयोद्यताः ।
टंकी दण्डी च धन्वी च तत्तद्युक्तास्तु वामतः ।।

इति ध्यायेत् । एवं जपेऽपि बोध्यम् । पंचाशदित्यत्र एकपंचा-शदिति ग्राह्यम् । मतान्तरेणाक्षर इति वर्णपृथक्त्वात् ।

ओं अं अजाय नमः शिरसि । ओं आं आनन्दाय नमः मुखे अभितः। ओं इं इन्द्राय नमः दक्षनेत्रे । ओं ईं ईशानाय नमः वामनेत्रे । ओं उं उग्राय नमः दक्षकर्णे । ओं ऊं ऊर्जाय नमः वामकर्णे । ओं ऋं ऋतुम्बराय नमः दक्षनासापुटे । ओं ॠं ॠघाय नमः वामनासापुटे । ओं ऌं ऌशाय नमः दक्षगण्डे । ओं ॡं ॡशाय नमः वामगण्डे । ओं एं एकात्मने नमः ऊर्ध्वोष्ठे । ओं

ऐं ऐरावताय नमः अधरोष्ठे । ओं ओं ओजोभृते नमः ऊर्ध्व-दन्तपंक्तौ । ओं औं औरसाय नमः अधोदन्तपङ्क्तौ । ओं अं अन्ताय नमः मुखान्तःस्थमूर्ध्नि स्थाने । ओं अः अर्धगर्भाय नमः वाचि ।।

दक्षबाहुसन्धिष्वग्रे च ।। ओं कं कपिलाय नमः। ओं खं खपतये नमः। ओं गं गरुडाय नमः। ओं घं घर्माय नमः । ओं ङं ङसाराय नमः ।

ततः वामबाहुसन्धिष्वग्रे च ।। ओं चं चार्वङ्गाय नमः । ओं छं छन्दोगम्याय नमः । ओं जं जनार्दनाय नमः । ओं झं झटितारये नमः । ओं ञं ञमाय नमः ।

दक्षपादसन्धिष्वग्रे च ।। ओं टं टंकिने नमः । ओं ठं ठकलाय नमः । ओं डं डरकाय नमः । ओं ढं ढरिणे नमः । ओं णं णात्मने नमः ।

वामपादसन्धिष्वग्रे च ।। ओं तं ताराय नमः । ओं थं थबाय नमः । ओं दं दण्डिने नमः । ओं धं धन्विने नमः । ओं नं नम्याय नमः ।

ओं पं पराय नमः दक्षिणपार्श्वे । ओं फं फलिने नमः वामपार्श्वे । ओं बं बलिने नमः पृष्ठे । ओं भं भगाय नमः गुह्ये । ओं मं मनवे नमः गुदे । ओं यं यज्ञाय नमः हृदये । ओं रं रामाय नमः त्वचि । ओं लं लक्ष्मीपतये नमः चर्मणि । ओं वं वराहाय नमः मांसे । ओं शं शान्तसंविदे नमः रुधिरे । ओं षं षड्गुणाय नमः मेदसि । ओं सं सारात्मने नमः मज्ज्ञायां । ओं हं हंसाय

नमः अस्थिषु । ओं ळं ळाळुकाय नमः प्राणे । क्षं लक्ष्मीनृसिंहाय नमः जीवे ।। इति मातृकामन्त्राणां जपेऽप्येवं पठेत् ।।

ततः विश्वामित्रगायत्रीमन्त्रस्य प्राणायामः कार्यः । प्राणायाममन्त्रस्तु दशप्रणवसप्तव्याहृतिशिरोयुक्तगायत्री । गुरुनमस्कारे एकादशस्थाने सवितृनामकनारायणाय नम इति वाच्यम् । तत्सवितुः हृदयाय नमः । इति षडंगन्यासं कृत्वा । ध्येयः सदेत्युक्तप्रकारेण सवितुरन्तर्गतनारायणं ध्यात्वा विश्वामित्रगायत्रीं जपेत् । जपकाले मौनेन ओंकारव्याहृतिगायत्र्यर्थमनुसन्दध्यात् । तत्रापि विशेषः। तत्सवितुरित्यत्र तच्छब्दस्य अग्न्यन्तर्गतपरशुरामार्थकत्वं। पादत्रयस्य अनिरुद्धप्रद्युम्नसंकर्षणार्थकत्वं जानीयात् । जपसंख्या तु श्रीमदाचार्यैरुक्ता [१] -

अर्कमण्डलगं विष्णुं ध्यात्वैव त्रिपदीं जपेत् ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ।।
आसूर्यदर्शात्तिष्ठेत्ततस्तूपविशेत वा ।। - इति ।

अत्र जपात् पूर्वं ऋषिछन्दोदेवतास्मरणं च कार्यम् । तत्र प्रणवस्य परब्रह्म ऋषिः परमात्मा देवता देवी गायत्री छन्दः व्याहृतीनां प्रत्येकं तिसृणां क्रमात् । विश्वामित्रजमदग्निभरद्वाजा ऋषयः। अग्निवायुसूर्यान्तर्गतानिरुद्धप्रद्युम्नसंकर्षणा देवताः । गायत्र्युष्णिगनुष्टभश्छन्दांसि । अस्य श्रीगायत्रीमन्त्रस्य विश्वामित्र

---

१. श्रीमदानन्दतीर्थभगवत्पादाचार्यैः सदाचारस्मृतौ उक्ता ।

ऋषिः । सवितृनामकश्रीलक्ष्मीनारायणो देवता । गायत्रीछन्दः । इति ऋष्यादिस्मरणानन्तरं ध्यानश्लोकाद्युक्तप्रकारं प्रणवाद्यर्थ-विशेषज्ञानपूर्वकं गायत्रीं च यथाशक्ति जपित्वा त्रिगुणमष्टाक्षरं तन्त्रसारोक्तप्रकारेण अष्टाक्षरन्यासध्यानपूर्वकं जपेत् ।।

**अष्टमहामन्त्रजपक्रमस्तु -**

नारायणाष्टाक्षरव्याहृतीद्वादशाक्षरं ।
गायत्री ब्रह्मऋषिका मातृका पुरुषसूक्तकम् ।
षडक्षरं विष्णुमन्त्रमेतान् मन्त्रान् जपेत् क्रमात् ।।
उपदेशक्रमेणैव अन्यान् मन्त्रान् जपेत् सुधीः ।।

ततः सन्ध्योपस्थानं कुर्यात्[१]।

तदुक्तमाचार्यैः -

गायत्र्यास्त्रिगुणं विष्णुं ध्यायन्नष्टाक्षरं जपेत् ।
प्रणम्य देवान् विप्रांश्च गुरूंश्च हरिपार्षदान् ।।

उपस्थानप्रकारमाह याज्ञवल्क्यः -

प्रातरुत्तानहस्ताभ्यां सायं सम्मुखहस्ततः।
मध्याह्ने तूर्ध्वबाहुभ्यां उपतिष्ठेद्दिवाकरम् ।। - इति ।

प्रणम्य देवानित्यस्यायमर्थः। हरिपार्षदान् विष्णुभक्तान् इति । देवानित्यादित्रयं विशेषणं । अवैष्णवदेवादिव्यावृत्तिः । 'दीनत्वात्-

---

१. ततः 'सन्ध्योपास्थानमि'त्यतो 'ब्रह्मादिशब्दवाच्यत्वोक्तेः' इत्यन्तः ग्रन्थो मास्तु । मन्त्रप्रकारानन्तरं अग्रेतनविधानेन द्विरुक्तित्वात् ।

देवनामानः ते ब्रह्मादिसनामकाः' इति गीतातात्पर्ये दैत्यानां देवशब्दत्वस्य ब्रह्मादिशब्दवाच्यत्वोक्तेः ।

तत्रायं प्रकारः। नारायणाष्टाक्षरमन्त्रस्तु आद्यन्तप्रणव-सहितः। ओं ओं नमो नारायणाय ओं इति । गुरुनमस्कारे एकादशस्थाने नारायणाय नम इति प्राणायमः ।।३६।। २४।। १२।। इति पक्षत्रयं शक्ताशक्तपक्षे ।।

अथ पंचाङ्गन्यासः। ओं कृद्धोल्काय हृदयाय नमः । ओं महोल्काय शिरसे स्वाहा । ओं वीरोल्काय शिखायै वषट् । ओं द्युल्काय नमः कवचाय हुं । ओं सहस्रोल्काय नमः अस्त्राय फट् इति दिग्बन्धः । एतानि पंच विष्णुनामानि ।।

अथ अष्टाङ्गन्यासः। ओं ओं विश्वाय नमः शिरसि । ओं नं तैजसाय नमः नेत्रयोः । ओं मों प्राज्ञाय नमः नासायां । ओं नां तुरीयाय नमः वाचि । ओं रां आत्मने नमः हृदि । ओं यं अन्तरात्मने नमः नाभौ । ओं णां परमात्मने नमः जान्वोः । ओं यं ज्ञानात्मने नमः पादयोः ।।

ततः कृद्धोल्कादिपञ्चमन्त्रैर्द्विरावृत्त्या उभयहस्ताङ्गुलीषु न्यस्य ।

उद्यद्भास्वत्समाभासश्चिदानन्दैकदेहवान् ।
शंखचक्रगदापद्मधरो ध्येयोऽहमीश्वरः ।।
लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ।।
सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् ।

मूर्तयोऽष्टावपि ध्येयाश्चक्रशङ्खवराभयैः ।।
युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः ।
चक्रशङ्खवराभयहस्तान्येतानि सर्वशः ।।
मूलरूपसवर्णानि कृष्णवर्णा शिखोच्यते ।। - इति ।
नारायणं विश्वादि कृद्धोल्कादींश्च ध्यात्वा ।

अस्य श्रीनारायणाष्टाक्षरमन्त्रस्य अन्तर्यामि ऋषिः परमात्मा श्रीलक्ष्मीनारायणो देवता देवी गायत्रीछन्दः। श्रीलक्ष्मीनारायण-प्रेरणया श्रीलक्ष्मीनारायणप्रीत्यर्थं श्रीमन्नारायणाष्टाक्षरमन्त्रजपं-करिष्ये इति संकल्प्य । ध्यात्वा मन्त्रं जप्त्वा पुनः पूर्ववत् प्राणायामन्यासौ कृत्वा ध्यानश्लोकं पठित्वा समाप्य । यस्य स्मृत्या चेति हरौ समर्पयेत् ।।

**मन्त्रतर्पणं तु -**

जले श्रीकारं लिखित्वा तत्र विष्णुमावाह्य संपूज्य मन्त्रमुच्चार्य नारायणं तर्पयामीत्युक्त्वा तर्पणसंख्या ।। ।।१०८।। ५४।।२४।।१०।। नात्र जपदशांशेन तर्पणं तस्य पुरश्चरण-विषयत्वात् । मन्त्रसन्ध्या तु मन्त्रार्थानुसन्धानाभावे कार्या । मन्त्रानुसन्धाने तु तत्फलस्यापि प्राप्तेः । तत्प्रकारस्तु अस्म-दाचार्यैः [१] स्मृतिसंग्रहे उक्तः । तत्रैव द्रष्टव्यः । बहुशिष्टाचाराभावात् नास्माभिरत्रोक्तः ।

---

१. एतद्ग्रन्थकर्तृश्रीछल्लारिनरसिंहाचार्यस्य पितृचरणाः नारायणाचार्यनामधेयाः 'स्मृतिसंग्रह' ग्रन्थकर्तारः ।

यद्यपि ब्रह्मचर्यादीनां सृष्ट्यन्त्यादि वर्णन्यासः चतुर्थाध्याये कथितः। तथापि तत्रैव एतेषु सर्वमन्त्रेषु इति एतच्छव्दग्रहणेन चतुर्थाध्यायोक्तमन्त्रग्रहणात् प्रथमाध्यायाष्टमहामन्त्रेषु सृष्ट्यन्तादि-विधानाभावात् । सृष्ट्यन्त्यादिन्यासेन कथितः चतुर्थाध्यायोक्तमन्त्रे-ष्वपि सृष्टानां वर्णन्यासं करणं तु कामनाभावेन ज्ञेयम् ।

सृष्टिन्यासो वर्णिनां तु संहतिर्मोक्षमिच्छताम् ।
स्थितिन्यासो गृहस्थानां त्रयं काम्यानुसारतः ।।

तथापि तस्य सन्न्यासिविषयत्वं ज्ञापयितुं शिष्टैः सृष्टिन्यास एव क्रियते । अत एव नारायणवर्मस्तोत्रे पादयोर्जानुनोरूर्वोरिति [१] । संहारन्यासं पूर्वमुक्त्वा 'विपर्ययमथाऽपि वे'ति सृष्टिन्यासः पश्चात्कथितः। यद्यपि अष्टमहामन्त्रेषु प्रणवस्य प्रथममन्त्रत्वात् तन्न्यासादिकं प्रथमं वक्तव्यम् । तथापि 'जपाधिकारी यतिरस्य सूचित' इति मध्वविजयोक्तेः । तथा शिष्टाचाराद्यभावाच्च तस्य गृहस्थाद्यजप्यत्वात् प्रणवन्यासादिकमन्त्रो न कथितः ।

व्यासाचार्यैस्तु शुद्धगृहस्थस्य अधिकारमाश्रित्य अष्टमहा-मन्त्रपद्धतौ प्रणवन्यासध्यानादिकं [२] कथितम् ।।

---

१. भागवते नारायण वर्मणि - 'पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि । मुखे शिरस्यानु-पूर्व्यादोंकारादीनि विन्यसेत् ।।' इति । अत्र आनुपूर्व्यादोंकारादीनि विन्यसेत् । अत्र 'आनुपूर्व्यात् संप्रदायक्रमादि'ति विजयध्वजाचार्याः ।

२. भार्यान्तरसम्बन्धरहितस्य एकपत्नीवृतस्थस्य सदाचारसम्पन्नस्य श्रोत्रियग्रहस्था-श्रमिणोऽपि प्रणवाधिकार इति अस्मद्गुरुचरणाः ।

।। अथ व्याहृतिमन्त्रः।। [१]

ओं भूः ओं भुवः ओं स्वः ओंभूर्भुवःस्वः इति मन्त्रः । नमने एकादशस्थाने हरये नम इति विशेषः। मन्त्रेण प्राणायामः ।। ३६।। २४।। १२।।

न्यासः । ओं नारायणाय हृदयाय नमः । इति हृदये । ओं भूः वासुदेवाय नमः शिरसे स्वाहा इति शिरसि । ओं भुवः संकर्षणाय शिखायै वषट् । ओं स्वः प्रद्युम्नाय कवचाय हुं । ओं भूर्भुवः स्वः अनिरुद्धाय अस्त्राय फट् इति दिग्बन्धः ।

ओं भूः वासुदेवाय नमः शिरसि । ओं भुवः संकर्षणाय नमः हृदये । ओं स्वः प्रद्युम्नाय नमः इति नाभौ । ओं भूर्भुवःस्वः अनिरुद्धाय नमः इति व्यापकाकारेण हस्ताभ्यां सर्वाङ्गे न्यस्य । अस्य श्रीव्याहृतिमन्त्रस्य ब्रह्मा ऋषिः शिरसि गायत्री छन्दः मुखे हरिर्देवता हृदये न्यस्य ।

उद्यदादित्यवर्णश्च ज्ञनमुद्राभयोद्यतः ।
लक्ष्मीधराभ्यामाश्लिष्टः ....... ।।

इत्यादिना हरिं ध्यात्वा ।

वासुदेवादिकाः शुक्लरक्तपीतासितोज्वलाः।
शङ्खचक्रगदाब्जेतः प्रथमो मुसली हली [२]।।
सचक्रशङ्खस्त्वपरस्तृतीयः शार्ङ्गहस्तवान् ।

---

१. अथाष्टौ महामन्त्रान् कथयति । अथ व्याहृतिमन्त्र इत्यादिना ।

२. हरिः इत्यन्यत्र पुस्तके ।

चक्रशङ्खस्तुरीयस्तु चक्रशङ्खासिचर्मवान् ।।
इति वासुदेवादि चतुरश्च ध्यात्वा जप्त्वा जपोपसंहारः पूर्ववत् कार्यः।

तर्पणं तु । ओं भूः अनिरुद्धं तर्पयामि । ओं भुवः प्रद्युम्नं तर्पयामि । ओं स्वः संकर्षणं तर्पयामि । ओं भूर्भुवःस्वः वासुदेवं तर्पयामि ।।१०८ ।।२७।।

## ।। अथ वासुदेवमन्त्रः।।

ओं नमो भगवते वासुदेवायेति मन्त्रः। नमने एकादशस्थाने वासुदेवाय नम इति विशेषमन्त्रेण प्राणायामः।। ३६।।१२।।२४।।

ओं अनिरुद्धाय हृदयाय नम इति हृदये । ओं नमो प्रद्युम्नाय शिरसे स्वाहा । ओं भगवते संकर्षणाय शिखायै वषट् । ओं वासुदेवाय कवचाय हुं । ओं नमो भगवते वासुदेवाय नारायणाय अस्त्राय फट् इति दिग्बन्धः।

ओं ओं केशवाय नमः शिरसि । ओं नं नारायणाय नमः चक्षुषोः। ओं मों माधवाय नमः नासिकायां । ओं भं गोविन्दाय नमः कवचाय हुं । ओं गं विष्णवे नमः हृदि । ओं वं मधुसूदनाय नमः नाभौ । ओं तें त्रिविक्रमाय नमः जान्वोः । ओं वां वामनाय नमः पादयोः । ओं सुं श्रीधराय नमः दक्षबाहौ । ओं दे हृषीकेशाय नमः वामबाहौ । ओं वां पद्मनाभाय नमः दक्षोरौ । ओं यं दामोदराय नमः वामोरौ न्यस्य ।

अस्य श्रीवासुदेवद्वादशाक्षरमन्त्रस्य अन्तर्यामि ऋषिः जगती छन्दः वासुदेवो देवता ।

अच्छवर्णोऽभयवरकरो ध्येयोऽमितद्युतिः ।
लक्ष्मीधराभ्यामाश्लिष्टः .....' ।।

इत्यादि मन्त्रदेवतां ध्यात्वा । 'वासुदेवादिकाः शुक्ला' इत्यादि पूर्वोक्तपरदेवतां ध्यात्वा देवताः ध्यायेत् ।

चक्रशङ्खगदाब्जेतः केशवः सूर्यसप्रभः [१] ।
नारायणः साब्जगदाचक्रशङ्खो रविप्रभः ।।
माधवश्चक्रशङ्खाब्जगदेतो रविसुप्रभः ।
गदाब्जशङ्खचक्रेतो गोविन्दो भास्करद्युतिः ।।
कंजकम्बूचक्रगदायुतो विष्णू रविप्रभः ।
सशङ्खाब्जगदाचक्रः सूर्याभो मधुसूदनः ।।
त्रिविक्रमो गदाचक्रशङ्खपद्मो रविप्रभः ।
श्रीधरोऽरिगदाकम्बुपद्मेतोऽर्कसमद्युतिः ।
सारिपद्मः शङ्खगदो हृषीकेशोऽर्कसप्रभः ।।
पद्मनाभः साब्जचक्रगदाशंखोऽर्कसंनिभः ।
दामोदरः शंखगदाचक्रपद्मोऽर्कसप्रभः ।।

इत्यक्षरदेवान् देत्वा जप्त्वा । जपोपसंहारः पूर्ववत् । तर्पणं तु मन्त्रमुच्चार्य वासुदेवं तर्पयामीति विशेषः ।।

## ।। अथ ब्रह्मगायत्रीमन्त्रः ।।

चतुर्विंशतिवर्णानां जपः। प्राणायामस्तु । दशप्रणवसप्त-

---

१. सूर्यसप्रभः । समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु इति समानस्य सः ।

व्याहृतिशिरोयुक्तगायत्र्या कार्यः । नमने एकादशस्थाने । ओं सवितृनामकनारायणाय नम इति विशेषः । प्राणायामान् ।।१२।। २४।। ३६।।

ओं नारायणाय हृदयाय नमः हृदये । ओं भूः वासुदेवाय शिरसे स्वाहा । ओं भुवः संकर्षणाय शिखायै वषट् । ओं स्वः प्रद्युम्नाय कवचाय हुं । ओं भूर्भुवःस्वः अनिरुद्धाय अस्त्राय फट् इति दिग्बन्धः ।

दक्षबाहुसन्धिचतुष्टयेऽग्रे च । तं केशवाय नमः । त्सं नारायणाय नमः । विं माधवाय नमः । तुं गोविन्दाय नमः । विं विष्णवे नमः [१]।

ततः वामबाहुसन्धिचतुष्टयेऽग्रे च । रें मधुसूदनाय नमः । णें त्रिविक्रमाय नमः। यं वामनाय नमः। भं श्रीधराय नमः। गों हृषीकेशाय नमः।

ततः दक्षपादसन्ध्यग्रेषु । दें पद्मनाभाय नमः। वं दामोदराय नमः । स्यं संकर्षणाय नमः । धीं वासुदेवाय नमः । मं प्रद्युम्नाय नमः ।

वामपादसन्ध्यग्रेषु । हिं अनिरुद्धाय नमः । धिं पुरुषोत्तमाय नमः । यों अधोक्षजाय नमः । यों नारसिंहाय नमः । नं अच्युताय नमः ।

---

१. 'विं विष्णवे नमः । रें मधुसूदनाय नमः । णें त्रिविक्रमाय नमः।' अत्र 'वं विष्णवे नमः । रें मधुसूदनाय नमः । ण्यं त्रिविक्रमाय नमः।' इत्यस्तु । परन्तु पुस्तकान्तरेष्वपि विमित्याद्येव ।

प्रं जनार्दनाय नमः शिरसि । चों उपेन्द्राय नमः मुखे । दं हरये नमः हृदि । यात् कृष्णाय नमः नाभौ । न्यस्य ।।

अस्य श्रीगायत्रीमन्त्रस्य प्रजापतिः ऋषिः शिरसि । गायत्री छन्दः मुखे । सविता देवतेति हृदये न्यस्य । 'प्रोद्यदादित्यवर्णश्च सूर्यमण्डलमध्यग' इति ध्यात्वा । 'शङ्खचक्रगदाब्जेतः' इत्यादिना केशवादिदामोदरान्तं ध्यात्वा । संकर्षणादिकृष्णान्तं ध्यायेत् ।

शंखाब्जारिगदीसूर्यप्रभः संकर्षणो विभुः ।
शंखचक्री पद्मगदी वासुदेवो रविद्युतिः ।।
प्रद्युम्नो रविभः [१] शंखगदाब्जारिधरो विभुः ।
अनिरुद्धो गदाशंखपद्मचक्री रविप्रभः ।।
पद्मशंखगदाचक्री सूर्याभः पुरुषोत्तमः ।
रविप्रभो गदाशंखचक्राब्जेतो [२] ह्यधोक्षजः ।।
नृसिंहः सूर्यभः पद्मगदाशंखोऽरिसंयुतः ।
सूर्याभोऽच्युतनाभाब्जशंखचक्रगदायुतः ।।
जनार्दनश्चक्रशंखगदाब्जेतो रविद्युतिः ।
उद्यदर्कनिभोपेन्द्रो गदाचक्राब्जशंखयुक् ।।
सारिपद्मगदाशंखो हरिः प्रोद्यद्रविप्रः ।
उद्यदर्कनिभः कृष्णो गदापद्मारिशंखभृत् ।।

इत्यक्षरमूर्तीः ।

---

१. रविभः रविरिव भा यस्य सः ।

२. शंखचक्रगदाब्जेतः । इतः युक्तः । अनेन मूर्तिलक्षणान्यपि ज्ञेयानि ।

'उद्यद्भास्वे'ति नारायणं। 'वासुदेव' इत्यादिना वासुदेवादि-कांश्च ध्यात्वा । आद्यन्तप्रणवसहितचतुर्विंशत्यक्षरगायत्रीमन्त्रजपं यथाशक्ति कृत्वा पूर्ववत्प्राणायामादिपूर्वकजपोपसंहारः कार्यः ।

तर्पणं तु मन्त्रमुक्त्वा 'सवितृनामकनारायणं तर्पयामि' इति विशेषः ।।

## ।। अथ मातृकामन्त्रः ।।

अत्र नमने एकादशस्थाने अजादिभ्यो नमः इति विशेषः। प्राणायामस्तु प्रणवेन अष्टाक्षरेण सदशप्रणवगायत्र्या कार्यः । ओं भूरित्यादि मातृकान्यासोक्तप्रकारेण पञ्चाङ्गन्यासादिध्यानान्तं कृत्वा अजादिदेवतासहितमातृकाणां जपं कुर्यात् । त्रिचतुःषड्दशवर्ति-रिति वचनोक्तप्रकारेषु मध्ये यथाशक्ति मन्त्रावृत्तिजपं कुर्यात् । प्राणायामाद्युपसंहारस्तु पूर्ववत् । 'ओं अजाय नमः अजं तर्पयामी'ति विशेषः ।।

## ।। अथ पुरुषसूक्तमन्त्रः ।।

नमने एकादशस्थाने पूरुषाय नमः । प्राणायामः । प्रणवादिभिः मातृकावत् । ओं भूः अग्न्यात्मने अनिरुद्धाय नम इति । आदिपञ्चाङ्गन्यासोऽपि तथा ।

अस्य श्रीपुरुषसूक्तस्य अन्तर्यामि ऋषिः । पंचदशार्चोऽनु-ष्टुभः। अन्त्यस्त्रिष्टुप् छन्द इति ऋग्वेदिनां । यजुर्वेदिनां तु पञ्चदश

अनुष्टुभः शेषस्त्रिष्टुप् इति मुखे । पुरुषनामक नारायणो देवता इति हृदये न्यस्य । 'उद्यद्भास्वत्समाभासश्चिदानन्दैकदेहवान्' इत्यारभ्य 'नित्यनिःशेषशक्तिमानि'त्यन्तेन ध्यात्वा । वासुदेवादिकान् ध्यात्वा पुरुषसूक्तं त्रिचतुःषटदशावृत्ति जप्त्वा । जपोपसंहारः पूर्ववत् ।

तर्पणं तु एकामृचमुक्त्वा पुरुषं तर्पयामीति विशेषः। पुरुषसूक्तार्थस्तु सामान्यतः। पुरुषपदार्थः पूर्णषड्गुणत्वं सृष्ट्यादि-कर्तृत्वम् । विशेषार्थस्तु द्वितीयस्कन्धभागवतोक्तरीत्या ज्ञातव्यः।।

## ।। अथ विष्णुमन्त्रः।।

नमने एकादशस्थाने 'विष्णवे नम' इति । अनेनैव प्राणायामः ।

अथ षडंगन्यासः । विं विश्वाय नमः हृदये । षं तैज-साय शिरसे । णं प्राज्ञाय वौषट् । मः अन्तरात्मने अस्त्राय फट् इति दिग्बन्धः । विं विश्वाय नमः शिरसि । षं तैजसाय नमः नासायां । णं प्राज्ञाय नम इति हृदये । वें तुर्याय नम इति नाभौ । नं अन्तरात्मने नम इति जान्वोः । मः अन्तरात्मने नम इति पादयोः ।

अस्य श्रीविष्णुषडक्षरमन्त्रस्य अन्तर्यामि ऋषिः दैवी गायत्री छन्दः विष्णुर्देवता । 'मेघश्यामसमाभास' इत्यादि 'नित्यनिःशेष-शक्तिमानि'त्यन्तं विष्णुं ध्यात्वा मूर्तयः षडेव ध्येयाः । 'चक्रशंख-वराभयै'त्युक्ताः 'प्रदीपवर्णाश्च सर्वाभरणभूषिताः' इत्यक्षरदेवान्

ध्यात्वा जपोपसंहारः पूर्ववत्कार्यः ।

तर्पणं तु मन्त्रमुक्त्वा विष्णुं तर्पयामीति विशेषः । विष्णुशब्दार्थस्तु विशिष्टप्रमाणबलस्वरूपत्वम् ।।

।।इति महामन्त्राः।।

## उपमन्त्रास्तु कृष्णव्यासहंसादिमन्त्राः ।

### ।। तत्र कृष्णमन्त्रः।।

ओं क्लीं कृष्णाय नमः। षडङ्गन्यासस्तु । पूर्णज्ञानात्मने हृदयाय नमः। पूर्णैश्वर्यात्मने शिरसे स्वाहा । पूर्णप्रभात्मने शिखायै वषट् । पूर्णानन्दात्मने कवचाय हुं । पूर्णतेज आत्मने नेत्राभ्यां वौषट् । पूर्णशक्त्यात्मने अस्त्राय फट् इति दिग्बन्धः ।

अस्य श्रीकृष्णषडक्षरमन्त्रस्य ब्रह्मा ऋषिः। गायत्री छन्दः । श्रीकृष्णो देवता । ध्यानम् ।

ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यं
सौन्दर्यसारमरिशंखवराभयानि ।
दोर्भिर्दधानमधिकं सरसं च भौष्मी-
सत्यासमेतमखिलप्रदमिन्दिरेशम् ।।

जपप्राणायामोपसंहारादि पूर्ववत् । एवमन्येऽपि मन्त्राः तन्त्रसारोक्तप्रकारेण ज्ञातव्याः ।।

एवं मन्त्रान् जप्त्वा पुनः सम्पुटाकारेण स्वस्मिन् मातृका-न्यासतत्त्वन्यासौ कृत्वा सन्ध्योपास्थानं कुर्यात् ।

उक्तं श्रीमदाचार्यैः -

गायत्र्या [1] स्त्रिगुणं विष्णुं ध्यायन्नष्टाक्षरं जपेत् ।
प्रणम्य देवान् विप्रांश्च गुरूंश्च हरिपार्षदान् ।।

- इति ।

उपस्थानप्रकारमाह याज्ञवल्क्यः -

प्रातरुत्तानहस्ताभ्यां सायं सन्मुखहस्ततः ।
मध्याह्ने तूर्ध्वबाहुभ्यां उपतिष्ठेद्दिवाकरम् ।।

- इति ।

प्रणम्य देवान्विप्रानित्यस्यायमर्थः । हरिपार्षदान् विष्णुभक्तान् देवान् इत्यादित्रयविशेषणमेतत् ।

विना [2] पुत्रं विना शिष्यं ब्राह्मणानभिवादयेत् ।
सन्मन्त्रविद्योपदेष्टा ज्ञानवृद्धो गुरुः स्मृतः ।।
पिता माता चाग्रजोऽपि गुरूनेतान्नमेत् सदा ।।

- इत्युक्तेः ।

अवैष्णवातिरिक्तदेवादीन् नमस्कारं कुर्यादिति ।

---

१ गायत्र्या इति । हरिपार्षदान् विष्णुभक्तान् देवान् विप्रान् गुरूंश्च प्रणम्य विष्णुं ध्यायन् हृदीति शेषः गायत्र्यास्त्रिगुणमष्टाक्षरं जपेदित्यन्वयः ।

२ विना पुत्रमित्यादि । अभिवादनलक्षणमुक्तं मनुना -

अभिवादात्परं विप्रो ज्यायान् समभिवादयन् ।
असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत् ।। - इति ।

तथा च 'जातवेदसे' 'ओं नमो ब्रह्मणे' इत्युक्त्वा सन्ध्यायै नमः । 'ओं नमो ब्रह्मण्यदेवाय' 'उत्तमे शिखरे जाते' 'आकाशात्पतितं तोयं' 'नमोऽस्त्वनन्ताय' इत्यादिना देवान् नमस्कृत्य आत्मनः प्रवरगोत्रोच्चारणं कृत्वा 'अहं भो अभिवादये' इत्युक्त्वा स्वसमीपस्थब्राह्मणानभिवादयेदित्युक्तं भवति । इदं जपसन्ध्योपस्थानं सायं कालेऽपि समम् ।

'ओं नमः प्राच्यै दिशे' इत्युक्त्वा प्राच्यादिदेवताः इन्द्रः शची अग्निः तत्पत्नी स्वाहा अनुसन्ध्येया । एवं दक्षिणस्यां दिशि यमः तत्पत्नी शामला । तथा पश्चिमायां दिशि वरुणः तत्पत्नी भागीरथी । प्रवहः तत्पत्नी प्रावाही । तथा उत्तरायां दिशि कुबेरः तत्पत्नी महा । रुद्रः तत्पत्नी पार्वती च अनुसन्ध्येयाः । ऊर्ध्वायां दिशि गरुडः सौपर्णी कामः तत्पत्नी रती च । अनन्तरं अधरायां दिशि । शेषः तत्पत्नी वारुणी । मित्रः तत्पत्नी छाया । तदनन्तरं अन्तरिक्षायां दिशि विनायकः तत्पत्नी सुस्वरा । विवस्वान् सूर्यः तत्पत्नी संज्ञा च ध्येयाः ।

एवं 'सन्ध्यायै नमः' इत्यादावपि तत्तन्नामकदेवतानुसन्धानं कृत्वा 'जातवेदसे' इत्यादौ तन्मन्त्रार्थानुसन्धानं कृत्वा नमस्कारः कार्यः । इदं तु ऋग्वेदिनाम् । अन्यशाखिनां सन्ध्योपस्थानं तु तत्तत्संप्रदायानुसारेण ज्ञेयम् ।

अनभिवाद्याः नारदीयपुराणोक्ताः -

विप्रं स्नानं प्रकुर्वन्तं समित्कुशकरं तथा ।
उदपात्रधरं चैव भुञ्जन्तं नाभिवादयेत् ।।
अभ्यक्तशिरसं चण्डं धावन्तं अशुचिं तथा ।
श्राद्धं व्रतं तथा दानं देवताभ्यर्चनं तथा ।।
यज्ञं च तर्पणं चैव कुर्वन्तं नाभिवादयेत् ।
सभायां यज्ञशालायां देवतायतनेष्वपि ।।
पुण्यक्षेत्रे पुण्यतीर्थे स्वाध्यायसमये तथा ।
सभायै नम इत्येव वदेत्प्रत्येकशो न तु ।।
अभिवादे कृते यस्तु न करोत्यभिवन्दनम् ।
आशिषं वा न कुरुते स याति नरकान् बहून् ।।
पादत्राणसमायुक्तः संवेष्टितशिरस्तथा ।
अनिवेदितयोनिश्च न कंचिदभिवादयेत् ।।

एवमुपस्थानान्ते ।

यस्य स्मृत्येति विष्णुसमर्पणं कृत्वा **प्रातरौपासनं** कुर्यात् ।

औपासनकालमाह दक्षः -

सन्ध्याकर्मावसाने तु कुर्यादौपासनं द्विजः ।
तच्च स्मार्तविवाहाग्नौ कुर्वीत प्रत्यहं गृही ।।
कृतदारो नैव तिष्ठेत्क्षणमप्यग्निना विना ।
तिष्ठेच्चेत्स द्विजो व्रात्यस्तथैव पतितो भवेत् ।

- इत्युक्तेः ।

औपासनं गोमयलिप्ते कुण्डे वा स्थण्डिले कुर्यात् ।
कुण्डललक्षणमुक्तम् । परशुरामीये -

त्रिष्वेकमेखलं कुण्डं विप्रादीनां क्रमाद्भवेत् ।
प्रथमा द्व्यङ्गुला प्रोक्ता द्वितीया त्र्यङ्गुला तथा ।
तृतीया मेखला प्रोक्ता चतुरङ्गुलमानतः ।।

- इति ।

कुंडखातपरिमाणं तु -

यो यत्कुंडस्य विस्तारो निम्नत्वं तावदीरितम् ।

- इति ।

कुंडमानं वदन्त्येके शतस्यार्धेऽष्टपर्वकम् ।
शतेऽर्कपर्वमानं स्यात्सहस्रार्धे नृपाङ्गुलम् ।।

- इति ।

अष्टपर्वकं अष्टाङ्गुलं । अर्कपर्वं द्वादशाङ्गुलं । नृपाङ्गुलं षोडशाङ्गुलमित्यर्थः ।
अनुयागे तु -

पूर्वोक्तलक्षणैर्युक्तं कुण्डं तालप्रमाणकम् ।
उक्तं तु नार्चने चैव न स्थिते तु चतुर्मुखे ।। - इति ।

तालोमणिबन्धः।

मध्यमोत्तमवीर्याणां चतुरस्त्रं फलप्रदम् ।
सर्वेषामेव मन्त्राणां वृत्तं [1] स्यात्सार्वकामिकम् । - इति ।

---

१. वृत्तं वर्तुलाकृतिः ।

विष्णुः -

बहुशुद्धे घने चाग्नौ सुसमिद्धे तथैव च ।
अधूमे लेलिहाने च होतव्यं कर्मसिद्धये ।।
योनर्चिषि जुहोत्यग्नौ ह्यङ्गारे चैव मानवः।
मन्दाग्निरामयावी च दरिद्रो भुवि जायते ।।

द्रव्यं तु [१] -

घृतमोदनसक्त्वादि तण्डुलादिकृताकृतम् ।
व्रीह्यादीत्यकृतं प्रोक्तमिति हव्यं त्रिधामतम् ।।

- इति ।

अभावे व्रीहियवयोर्गोधूमा दधि वा पयः।
द्विजस्तयोरभावे तु जहुयादुदकेन वा ।।

अरुणोदयकाले स्नानाशक्तः सूर्योदये औपासनं कुर्यात् । अस्य कर्तारः [१] । स्वयं पत्नी पुत्रः शिष्यः कुमारिका ।

---

१. द्रव्यं त्विति । स्मत्यर्थसारे च -

शालिश्यामकनीवारा व्रीहिगोधूमपावकाः ।
एतेषां तण्डुला होम्या यावनालाः प्रियंगवः ।।
प्रियंगवः शालवाश्च गोधूमा व्रीहयो यवाः ।
स्वरूपेणाऽपि होम्याः स्युः स्वरूपेणैव वै तिलाः ।। -इत्यादि ।

विशेषस्तु हेमाद्रौ ।

२. अस्य कर्तार इति । होमे मुख्ययजमानः पत्नी पुत्रश्च कन्यका ।
'ऋत्विक् शिष्यो गुरुभ्राता भागिनेयः सुतापतिः' - इति दक्षवचनम् ।

तत्रायं प्रकारः। अग्नौ अर्चनं कृत्वा । 'चत्वारि शृङ्गा' इत्युक्त प्रकारेण अग्निदेवतां ध्यात्वा । तत्र 'अङ्गारवर्णमि'त्यादि प्रकारेण अग्न्यन्तर्गत-श्रीमुख्यप्राणान्तर्गत-यज्ञपुरुषात्मकपरशुरामं ध्यात्वा प्रातराहुतिद्वयं दत्वा उपस्थानं कृत्वा श्रीकृष्णार्पणं कुर्यात् । एवं सायंकालेऽपि ।

ऋत्विक् शिष्यो गुरुर्भ्राता भागिनेयः सुता पतिः ।

- इति दक्षः।

समस्तहोमादिप्रकारास्तु तत्तसूत्रवृत्त्यादावुक्ता ज्ञेयाः ।

ततः प्रातःकालीनदेवपूजां कृत्वा तथा प्रदक्षिणानमस्कारांश्च कृत्वा ध्यानं कुर्यात् ।

तत्रायं प्रकारः -

एकान्ते [१] तु शुचौ देशे जनसंमर्दवर्जिते ।
कुशाजिनाद्यासनगः स्वस्थचित्तः स्थिरः शुचिः ।।
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं तु दिशश्चानवलोकयन् ।।
अष्टपत्रे तु हृत्पद्मे मध्ये सूर्येन्दुवह्निगम् ।
पीठं तन्मध्यपद्मस्थं नारायणमनामयम् ।।
उद्यदादित्यसंकाशं तेजसानुपमं सदा [२] ।
सहस्राणां च सूर्याणां सज्ज्ञानान्दरूपिणम् ।।

---

२. एकान्ते इत्यादि । अस्य संकलितार्थस्तु अधिकारीमुमुक्षुरित्यादिना स्पष्टोऽग्रे ।
२. दृशेत्यन्यत्र ।

अतिरिक्ततलं भास्वन्नखव्रातविभूषितम् ।
वृत्तजंघं वृत्तजानुं हस्तिहस्तोरुमीश्वरम् ।।
महाकटितटोन्नद्धकाञ्चीपीताम्बरोज्ज्वलम् ।
निम्ननाभिं च त्रिवलिं सुसुवृत्तोरुबन्धनम् ।।
विस्तारवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ।
वनमालाधरं हारवैजयन्त्यादिभिर्वृतम् ।।
पृथुदीर्घचतुर्बाहुं शङ्खचक्रगदाम्बुजैः ।
युक्तमुन्निद्रपद्माक्षं स्फुरन्मकरकुण्डलम् ।।
पूर्णचन्द्रायुतोद्रिक्तकान्तिसन्मुखपंकजम् ।
सुभ्रुवं सुललाटान्तं किरीटाबद्धमूर्धजम् ।।
निःशेषदुःखशमनं नित्यानन्दशुचिस्मितम् ।
लक्ष्मीधराभ्यामाश्लिष्टं स्वमूर्तिगणमध्यगम् ।।
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ।
सैव्यमानं महाभक्त्या ध्यायेत्तं पुरुषोत्तमम् ।।

- इति ।

## गीताप्रणवकल्पतन्त्रसारवाक्यानामयं समुदायार्थः ।

अधिकारी मुमुक्षुः सम्यक् नद्यादौ स्नात्वा एकान्ते कुशाजिनवस्त्ररूपमृदुभूते आसने पद्मस्वस्तिकवीरादिशरीरासने चोपविश्य भूतोच्चाटनादितत्वन्यासमातृकान्यासौ कृत्वा ऊरुद्वयोपरि हस्तद्वयं कृत्वा हृदये दृढश्रवणमननवागग्रे [१] स्वेष्टदेवताप्रतिमां

---

१. स्वनासाग्रे इति प्रत्यन्तरे ।

प्रस्थाप्यावलोकयन् ध्यानाभ्यासं कुर्यात् । यथाशक्ति रेचकपूरक-कुम्भकक्रमेण वायुधारणानन्तरं ध्यानं कुर्यात् ।

ततः हृदये अधोमुखं हृत्कमलमष्टपत्रं प्रणवेनोर्ध्वमुखं कृत्वा, तेनैव विकास्य तत्कर्णिकायां सूर्यमण्डलं तदुपरि चन्द्रमण्डलं तदुपरि त्रिकोणमग्निमण्डलं ध्यात्वा, तज्ज्वालायां रमारूपदिव्य-रत्नमयमण्डपं तन्मध्ये दिव्यरत्नखचितसुवर्णमयपीठं ध्यात्वा, तत्र पीठदेवताः परदेवताद्याः आवाह्य, पीठोपरि षट्कोणपद्मं ध्यात्वा, कोणेषु देवस्याग्रे दक्षिणे सूर्यं सव्ये सोमं अग्रे वह्निं एतान् दीपरूपान् ध्यात्वा, देवस्य सव्ये श्रियं दक्षिणे भुवं पृष्ठभागे दुर्गां ध्यात्वा, तत्र षट्कोणभूमौ अष्टदलपद्मं रमारूपं ध्यात्वा, तत्र पद्मदलेषु सूर्यकेसरेषु सोमं कर्णिकायां हुताशनं ध्यात्वा, प्रत्येकं रमादलेषु मध्ये कर्णिकायां च -

विमलोत्कर्षणी ज्ञाना क्रिया योगा तथैव च ।

प्रह्वी सत्या तथेशानाऽनुग्रहा चेति शक्तयः ।।

इत्युक्तं परमात्मभूतनवशक्तिः छत्रचामरदर्पणव्यजनगीतवादित्र-नृत्यस्तोत्राणि ध्यात्वा, आत्मान्तरात्मा परमात्मा ज्ञानात्मा चेति सोपानदेवताः परमात्ममूर्तीः ध्यात्वा, कर्णिकोपरि तमो रजः सत्वमिति क्रमेण त्रिगुणमानिनीं लक्ष्मीं ध्यात्वा, ततस्तल्पाकारं छत्राकारफणं शेषं ध्यात्वा, तदुपरि गुणत्रयाभिमानिनीं चित्रासन-रूपां लक्ष्मीं ध्यात्वा, तत्र स्वरूपां लक्ष्मीं ध्यात्वा, तत्र स्वरूप-हृदये स्वरूपाङ्गुष्ठपरिमितं बाह्यहृदये बाह्याङ्गुष्ठपरिमितं तत्पृष्ठभागे

हृत्कमलव्यापिनं प्रादेशपरिमितं तदधः कर्णिकामूले अङ्गुष्ठाग्रप्रमाणं च परमात्मानं 'नारायणनामानं' इत्याद्युक्तप्रकारेण 'लक्ष्मीधराभ्यां' इत्यादि तन्त्रसारोक्तावरणदेवतासहितं उद्यदादित्यवर्णं मेघश्यामं वा ध्यायेत् ।।

**अत्र विशेषः -**

द्वात्रिंशल्लक्षणानि ध्येयानि । तथाहि । भुजनेत्रहनुजानु- नासास्थानेषु दैर्घ्यानि । त्वक्केशाङ्गुलिदन्ताङ्गुलिपर्वसु पंच सौक्ष्म्याणि । पाणिपादतलद्वयनेत्रान्ते तालुस्थाने जिह्वायां अधरोष्ठे नखेषु रक्तानि । कक्षिकुक्षिवक्षोघ्राणस्कन्धललाटेषु चेति षट्सु औन्नत्यम् । ललाटकटिवक्षःसु त्रिषु स्थानेषु गम्भीरत्वानि ।
तथा चोक्तं लक्षणग्रन्थे -

पंचदीर्घः पंचसूक्ष्मः सप्तरक्तः षडुन्नतः ।
त्रिपृथुर्लघुगम्भीरो द्वात्रिंशल्लक्षणानि तु ।।

अत्र लघुशब्दो ह्रस्वार्थो ज्ञेयः । तथा दक्षिणकरे सहस्रारचक्रं अष्टारां गदां शतावर्तं शंखं च लक्षणम् । वामकरे चक्रशंखगदापद्मानि ध्येयानि ।
तथा चोक्तं बृहद्भाष्ये -

सहस्रारेण चक्रेण चिह्निता दक्षिणे करे ।
गदामष्टाश्रयां चैव शतावर्तेन कम्बुना ।।
वामे करे तथाब्जेन सहस्रदलभेन चे ।।

- इति ।

भागवते च -

संचिन्तयेद्भगवतश्चरणारविन्दं
वज्राकुंशध्वजसरोरुहलाञ्छनाढ्यम् ।

पंचरात्रे च -

शंखचक्रगदापद्मैरंकितं पादपद्मजम् । - इति ।

हृदये ध्येयमूर्तयस्तिस्त्र उक्ता बृहद्भाष्ये -

हृदये सर्वशो व्यापी प्रादेशः पुरुषोत्तमः ।
जीवानां स्थानमुद्दिष्टः सर्वदैव सनातनः ।।
हृत्कर्णिकामूलगतः सोऽगुष्ठाग्रप्रमाणकः ।
मूलेश इति नामाऽस्मिन् सर्वे जीवाः प्रतिष्ठिताः ।।
अङ्गुष्ठमात्रपुरुषे कर्णिकाग्रस्थिते हरौ ।
प्रविशन्ति सुषुप्तौ तु प्रबुद्ध्यन्ते ततस्तथा ।। - इति ।
सोऽयं त्रिरूपी भगवान् हृदयाख्यः प्रकीर्तितः । - इति ।
स्थानमायतनं प्रोक्तं प्रतिष्ठाधारकः पुमान् ।
- इति वचनात् ।

स्थानप्रतिष्ठाशब्दयोरर्थभेदो ज्ञातव्यः।

इदं च यावत्कालं ध्यानाभ्यासं कुर्यात् । वासनामय-प्रतीत्यनन्तरं तस्यां प्रतिमायां वासनामयाग्र्योदकगन्धपुष्प-तुलस्यर्घ्यादिनैवेद्यताम्बूलसुवर्णपुष्पादिकेनैव स्नानालंकारादिना मनसा कल्पितेन पूजां कृत्वा तत्प्रतिमान्तर्गतविष्णुः निर्दोषः

पूर्णज्ञानः पूर्णानन्दः सर्वस्वामी पूर्णगुण इति ध्यानं कुर्यात् । इदं च यावत्स्वरूपज्ञगुरुदर्शनं तावत्कुर्यात् । पश्चात्तादृशगुरूक्तप्रकारेण यावन्मोक्षः तावद्ध्यानं कुर्यात् । अपरोक्षज्ञानानन्तरं च मोक्षे आनन्दाभिवृद्ध्यर्थं ध्यानं कुर्यात् । तथा वायुधारणाभ्यासेति-कर्तव्यमुक्तं गीतादौ ।

प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ।
संनियम्येन्द्रियग्रामं चक्षुश्चैवान्तरे भ्रुवोः ।।
कृत्वा परोक्षं यावत्स्यात्तावद्ध्यायीत नित्यशः ।।

- इति ।

अपरोक्षं अपरोक्षज्ञानम् ।

ध्यानसमाप्त्यनन्तरं सम्पुटाकारेण मातृकान्यासतत्वन्यासौ कृत्वा समर्पयेत् । एतद्ध्यानाङ्गं यमप्रत्याहारपरिमिताशनादिकं श्रीमद्भगवद्गीतायां भगवतोक्तं ज्ञेयम् ।

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमास्त्वेते तु कथिताः स्वाध्यायो हरिपूजनम् ।।
तपः शौचं तथा तुष्टिर्नियमाः परिकीर्तिताः ।
खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते ।।
अप्रयत्नसमाधिश्च दर्शनं चिरमानय ।।

इति ध्यानम् ।।

ततः यथाशक्ति श्रीमद्ब्रह्मसूत्रभाष्यभागवतादिसच्छास्त्र व्याख्यानं कृत्वा पूजासाधनं श्रीतुलसीपुष्पगन्धादिकं -

भानुशुक्रभौमवासरेषु द्वादशीदर्शयोस्तथा ।
व्यतीपाते वैधृतौ च मध्याह्नादूर्ध्वमप्युत ।।
न स्नातस्तुलसीं छिन्द्यान्न गृह्णीयात्क्रमेण च ।।

इत्यनिषिद्धदिने सम्पाद्य माध्याह्निकस्नानं कृत्वा सन्ध्यावन्दनं कृत्वा

मध्याह्ने तु विशेषोऽयं दद्यादर्घ्यं हंस इत्यृचा ।
आकृष्णेन द्वितीयार्घ्यं गायत्र्या च तृतीयकम् ।।

इति प्रमाणानुसारेण अर्घ्यत्रयं दत्वा उदुत्यमित्यनेन सूर्योपस्थाना-नन्तरं जपं कृत्वा विष्णौ समर्प्य वेदतन्त्रसारोक्तप्रकारेण **विष्णोर्महापूजां कुर्यात् ।**

स्नानान्तरं गृहं प्रत्यागत्य पादौ प्रक्षाल्य गण्डूषचतुष्टयं कृत्वा द्विराचम्य हस्तौ प्रक्षाल्य देवगृहसमीपं गत्वा दक्षिणपाद-पुरःसरं देहलीमुपस्पृश्य देवगृहं प्रविश्य द्वारपालान् नमेत् । पूर्वद्वारे श्रियै नमः। जयाय नमः। विजयाय नमः।। दक्षिद्वारे श्रियै नमः। बलाय नमः प्रबलाय नमः। पश्चिमद्वारे श्रियै नमः। नन्दाय नमः । सुनन्दाय नमः । उत्तरद्वारे श्रियै नमः। कुमुदाय नमः कुमुदाक्षाय नमः। इति द्वारपालान्नत्वा ।

'वन्दे विष्णुं नमामि श्रियमि'त्यादिना विष्ण्वादिसर्व-देवान्नत्वा 'नमो ब्रह्मण्यदेवाये'त्युक्त्वा 'अपराधसहस्राणी'त्युक्त्वा

'वायावायाहि दर्शते'त्युक्त्वा । 'अग्निनाग्निः समिध्यत' इति दीपं प्रज्वाल्य ।

वेदिकायामधस्तिष्ठेद्देवस्याभिमुखोऽर्चकः ।
कृताञ्जलिपुटो भूत्वा विनयान्नतकन्धरः ।।
मानसान्वाचकान्पापान्क्षमस्व पुरुषोत्तम ।
वैष्णवद्वेषहेतून्मे भस्मसात्कुरु माधव ।।
आयताभ्यां विशालाभ्यां शीतलाभ्यां कृपानिधे ।
करुणारसपूर्णाभ्यां लोचनाभ्यां विलोकय ।।

इति विज्ञाप्य ।

'आगमार्थं [१] तु देवानां गमनार्तं तु रक्षसामि'ति मन्त्रेण घण्टानादं कृत्वा ।

घण्टाग्रे ब्रह्मदैवत्यं मुकुले रुद्रदैवतम् ।
नादे सरस्वती चैव नाले नागाधिदैवतम् ।।

---

१. आगमार्थंत्विति ।

आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।
कुरु घण्टारवं तत्र देवताह्वानलांछनम् ।।
अज्ञानात् ज्ञानतो वाऽपि कांस्यघण्टां न वादयेत् ।
राक्षसानां पिशाचानां तद्देशे वसतिर्भवेत् ।।
सर्ववाद्यमयी घण्टा देवदेवस्य वल्लभा ।
तस्मात्सर्वप्रयत्नेन घण्टामाचाल्य वादयेत् ।।

- इति श्रीमज्जयतीर्थप्रणीतपद्यमालायाम् ।

येभ्यो मातेत्यस्य मन्त्रस्य गयप्लात ऋषिः विश्वेदेवा देवता जगती छन्दः मनुष्यगन्धनिर्हरणार्थं जपे विनियोगः ।

ओं येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः ।
उक्थशुष्मान्बृषभरान्स्वप्नसस्तां आदित्यां अनुमदा स्वस्तये ।।
एवापित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणां ।।
हिरण्यगर्भःसमवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ।।

## अथ मण्डपध्यानं [१] ।

उत्तप्तोज्ज्वलकांचनेन रचितेष्वेवंविधैः साधकैः ।

....................

'अङ्गुष्ठतर्जन्यग्राभ्यां निर्माल्यमपनोदयेदि'त्युक्तप्रकारेण 'अहं रुद्रेभिरि'ति निर्माल्यं विसृज्य ब्रह्मपारस्तोत्रं पठेत् ।

प्रचेतस ऊचुः -

ब्रह्मपारं मुने श्रोतुमिच्छामः परमं स्तवं ।
जपता कण्डुना देवो येनाराध्यत केशवः ।।१।।

---

१. मण्डपध्यानम् इति। उक्तं चाचार्यैः -

'सौवर्णमण्डपं ध्यायेद्धेमरत्नोपशोभितम् ।' - इत्यादि ।

श्री सोम उवाच -

पारं परं विष्णुरनन्तपारः परः पराणामपि पारपारः ।
स कारणं कारणतस्ततोऽपि तस्यापि हेतुः परहेतुहेतुः ।
कार्येषु चैवं सहि कर्मकर्तृरूपैरशेषैरवतीह सर्वम् ।।२।।
ब्रह्मप्रभुर्ब्रह्म स सर्वभूतो ब्रह्म प्रजानां पतिरच्युतोऽसौ ।
ब्रह्माव्ययं नित्यमजं स विष्णुरपक्षयाद्यैरखिलैरसङ्गी ।।३।।
ब्रह्माक्षरमजं नित्यं यथासौ पुरुषोत्तमः ।
तथा रागादयो दोषाः प्रयान्तु प्रशमं मम ।।४।।
य एतद्[१] ब्रह्मपाराख्यं संस्तवं परमं जपन् ।
अवाप परमां सिद्धिं स समाराध्य केशवम् ।।५।।

स्वामिन्नमः श्रीरमण प्रसीद ।।

श्रीनृसिंहं मध्वगुरुं नत्वा जयमुखान् गुरून् ।
ब्रह्मपारस्तुतिव्याख्यां करिष्यामो यथामति ।।[२]

वि- विष्णुवराहपुराणादौ ब्रह्मपारस्तोत्रमाहात्म्यमुक्तम् । तच्च तत एवेति ज्ञेयम् । तत्र प्रचेतस ऊचुः । ब्रह्मपारमिति ।

अयमर्थः । हे सोम ब्रह्म परिपूर्णगुणो विष्णुः। पारः संसारसमुद्रस्य तीरप्रापकः अर्श आद्यच् । तत्प्रापकमित्यर्थः। ब्रह्मपारनामकं परमं स्तवं विष्णोः स्तोत्रं वयं इच्छामः । येन

---

१. एतद् । एतद्वै इत्यन्यत्र पुस्तके ।

२. ग्रन्थकृता ब्रह्मपारस्तोत्रस्य व्याख्यानं प्रारभ्यते ।

स्तवेन जपता जपं कुर्वता कण्डुना तन्नामकऋषिणा केशवो देवः आराध्यत । राधसंसिद्धौ कर्मणि लङ् । जपकाले कण्डु ऋषिणा ब्रह्मपारस्तोत्रजपेन विष्णुः प्रसन्नीकृतः । तत्स्तोत्रं मां प्रति वदेति भावः। चन्द्रस्य मुने इति सम्बोधनं तु सर्वदा विष्णोः मननशीलत्वादिति भावः । मुनेरिति षष्ठ्यन्तं वा । मुनेः कण्डोः सम्बन्धि स्तोत्रमित्यन्वयः ।।१।।

सोम उवाच । पारं परं विष्णुरिति अस्यार्थः । पारं 'पृ पालन पूरणयो'रिति धातोः भावे इति सूत्रेण भावे घञ् । तथा अर्श आद्यच् । ब्रह्मविशेषणत्वान्नपुंसकम् । सर्वत्र सर्वदा व्याप्तत्वात्पार इत्यर्थः । पारं विलक्षणं विष्णुं चेष्टकत्वबलशीलः। णकारो बलं षकारो प्राणात्मेति श्रुतेः । उकारस्य ताच्छी-ल्यार्थकत्वात् । अनन्तपारः अनन्तः अपरिमितः पारः पालनं यस्यासौ पालनार्थधातोः अकर्तरि च कारके संज्ञायामिति कर्मणि घञ् । परेभ्यो उत्तमेभ्यो रमाब्रह्मादिभ्यो उत्तमः । निरवधिकोत्तम इत्यर्थः । 'परः स्यादुत्तमार्थेऽपि वैरिदूरेषु केवले' इति विश्वः । परमार्थरूपी । परमार्थानि यथार्थानि रूपाणि रामकृष्णादीनि यस्य सन्तीति तथोक्तः । स ब्रह्मपारः । ब्रह्मणि वेदे पारः प्रीतिः । तया सहितः तेन सहेति बहुव्रीहिः । वेदस्य स्वप्रतिपाद्यत्वात् तत्र प्रीतियुक्त इत्यर्थः । 'पृ प्रीतौ' इति स्वादिगणस्थधातोर्भावे घञ् । परपारभूतः परेषां ब्रह्मादीनां संसारसमुद्रस्य पारः तीरभूतः । पराणां वैरिणां परः अतिदूरे विद्यमानः । विष्णुवैष्णवद्वेषिणां

अप्राप्य इत्यर्थः । अपि शब्दः विशेषेण समुच्चये । पारं व्यापारो एतज्जगत् 'पृङ् व्यायाम' इत्यतः कर्मणि घञ् । व्यायामो व्यापारः तस्य व्यापारो यस्मात् स तथोक्तः । अस्मादेव धातोः भावे घञ् । सर्वनियामक इति यावत् ।

सकारणं कारणतः। अवतीह सर्वं । अस्यार्थः। सः 'सारत्वात्स इति प्रोक्त' इति श्रुतेः कारणं सर्वजगद्विनाशकं 'कृञ् हिंसायामि'त्यतः करणाधिकरणयोश्चेति चकारात्कर्तरि ल्युट् । करणे वा कारणतः कारणेषु इतरेभ्योऽपि सप्तम्यन्तात्तसिः । ततः व्याप्तः तनोतेः क्तप्रत्यये अनुदात्तोपदेशेति नकारलोपः । तस्य सर्वजगतः हेतुः कारणं जनक इति यावत् । परहेतुः हेतुः । परस्य स्वापेक्षया भिन्नस्य जगच्चेतनात्मकप्रपंचस्य हेतुः कारणम् । रमाब्रह्मादिभ्यो हेतुः ज्ञानवृद्धिप्रदः । 'हिगतौ वृद्धौ च' इति धातोरन्तर्भावितण्यर्थात् औणादिकस्तुन्प्रत्ययः । एवं कार्येषु च ततः व्याप्त इत्यन्वयः । स विष्णुः कर्म कर्तृरूपैः कर्माणि कर्तारश्च उपलक्षणमेतत् । तेन कारणादिकमपि गृह्यते । तेषु षट्कारकेषु विद्यमानानि यानि स्वस्व रूपाणि तैरशेषैः सर्वैः सर्वं जगत् इत्थं लोके अवति रक्षति ।।२।।

ब्रह्मप्रभुर्ब्रह्म स सर्वभूत इति । ब्रह्मप्रभुः ब्रह्मणः लक्ष्म्याः प्रभुः पतिः ।

मम योनिर्महद्ब्रह्म तस्मिन्गार्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ।।

इति गीतोक्तेः । योनिः पत्नी । ब्रह्म अनन्तगुणपूर्णं 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणाः' इति श्रुतेः स विष्णुः सर्वस्मिन् भूतः विद्यमानः असौ अच्युतः ब्रह्मप्रजानां ब्राह्मणरूपाणां प्रजानां स्वामी ब्रह्म उत्तरत्र स इत्युक्तेः परस्येति लभ्यते । तस्य विष्णोः ब्रह्म ज्ञानं अव्ययं भोगतो नाशरहितं । नित्यं स्वरूपेण नाशरहितं अजं उत्पत्तिशून्यं । स विष्णुः अखिलैः समस्तैः अपक्षयाद्यैः अपक्षयो देहादिनाशः । सः अद्यो येषां तैः दोषैः असंगी सम्बन्धशून्यः । यस्य ज्ञानादिकं उत्पत्तिनाशशून्यं स विष्णुः सर्वदोषशून्य इति भावः ।।३।।

ब्रह्मा विरिंचिद्विजयो ऋत्विक् चन्द्रार्कयोगयोः ।

ब्रह्म प्रोक्तं तपोऽध्यासवेदज्ञानेषु सूरिभिः।। -इति विश्वः ।

कण्डुः ऋषिः देशकालादिव्याप्तस्य विष्णोः सृष्ट्यादिकर्तृत्वं व्याप्तस्य विष्णोः सृष्ट्यादिकर्तृत्वं अनन्तगुणपूर्णत्वं लक्ष्मीपतित्वादिकं चोक्त्वा स्वापेक्षितं प्रार्थयते । ब्रह्माक्षरमिति । अस्यार्थः। असौ पुरुषोत्तमः । नित्यं निरन्तरं यथा ब्रह्म सकलगुणपूर्णं अक्षरं नाशरहितं अजं उत्पत्तिशून्यम् । तथा ज्ञानिनो मम रागादयो दोषाः कामक्रोधादयः । प्रशमं नाशं प्रयान्तु ।।४।।

सोम उवाच । य एतदिति [१] । स कण्डुमुनिः। सिद्धिं मोक्षमित्यर्थः।।५।।

---

१. य एतदिति । अत्र 'संस्तवं परमं जपन्' इतियत्र जपेदिति वा पाठः । यः कण्डुमुनिः एतद् ब्रह्मपाराख्यं परमं संस्तवं जपन् केशवं समाराध्य परमां सिद्धिं अवाप इत्यन्वयः ।

श्रीब्रह्मपारस्तवराजटीका श्रीमध्वगुर्वादिसविष्णुतुष्टये ।
छलारिनारायणवर्यपुत्रनृसिंहनाम्ना रचिता प्रभूयात् ।।[१]

अराध्यसे प्राणभृतां प्रणेत्रा प्राणाधिनाथेन समीरणेन ।
नारायमज्ञानसुखैकपूर्ण स्वामिन्मम श्रीरमण प्रसीद ।।१।।
मयि स्थितो मदङ्गेषु स्वतन्त्रो व्याप्तवान् हरिः ।
स विष्णुश्चास्वतन्त्रं मां स्वेच्छया वर्तयत्यजः ।।२।।
ओं निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् ।
न ऋते त्वत्क्रियते किंच नारे महामर्कं मघवं चित्रमर्च ।।

इति प्रार्थयेत् ।

ततः प्राणानायम्य । संकल्प्य । श्रीभारतीपतिमुख्य-प्राणान्तर्गतविष्णुप्रेरणया विष्णुप्रीत्यर्थं भगवतो बलेन भगवतो वीर्येण भगवतस्तेजसा भगवतः कर्मणा भगवतो वासुदेवस्य चाज्ञया गुरुप्रसादकृपया भगवता वासुदेवेन प्रेरितोऽहं भगवतो वासुदेवस्य षोडशोपचारैः पूजाख्यं कर्म करिष्ये । पूजासाधन-द्रव्याणि देवस्य दक्षिभागे अर्घ्योदकगन्धतुलस्यादीनि निक्षिप्य ।

ततो भूतोच्चाटनतत्त्वन्यासादीनि कृत्वा अष्टाक्षरेण प्राणानायम्य विष्णुपूजाधिकारसिद्ध्यर्थं नारायणाष्टाक्षरमन्त्रजपं १०८ कृत्वा पुनः प्राणायामः । ध्यानश्लोकं पठित्वा कलशार्चनं कुर्यात् ।

---

१. ग्रन्थकारेण स्वकृतब्रह्मपारस्तवटिप्पणी अत्र परिसमाप्यते ।

तत्रायं विवेकः -

सम्भवे सप्तकलशानभिषेकस्य सिद्धये ।
बृहत्कलशमेकं तु द्वितीयं कुम्भसंज्ञितम् ।।
नैवेद्यप्रोक्षणायैकं पंचपात्रप्रपूरकम् ।
पानीयार्थं च गन्धार्थं हस्तप्रक्षालनार्थकम् ।।
एवं वै सप्तकलशान् पंचत्रीनेकमेकवमेव वा ।
असम्भवे च सर्वेषां भिन्नपात्राणि कल्पयेत् ।।

एवं कलशान् स्थापयित्वा पीठपूजां कुर्यात् । पीठमध्ये मूलमन्त्रेण परदेवतायै श्रीलक्ष्मीनारायणायनमः । देवस्य वामभागे गुरुभ्यो नमः । दक्षिणे सर्वदेवताभ्यो नमः । पुनर्वामभागे सर्वगुरुभ्यो नमः । अत्र पीठावरणपूजादौ देवपूजकयोर्मध्यभागः प्राची ज्ञेयः । ततः सव्याकारेण देवस्य अष्टदिक्कल्पना ज्ञेयाः ।

आग्नेयादिदिक्षु प्रागधोभागेषु धर्माधिपतये यमाय नमः । ज्ञानाधिपतये वायवे नमः । वैराग्याधिपतये शिवाय नमः । ऐश्वर्याधिपतये इन्द्राय नमः ।

पीठस्य फलकेषु प्राच्यादिचतुर्दिक्षु । अधर्माधिपतये निर्ऋतये नमः । अज्ञानाधिपतये दुर्गायै नमः । अवैराग्याधिपतये कामाय नमः । अनैश्वर्याधिपतये रुद्राय नमः ।

मध्ये वक्ष्यमाणाः योगपीठपर्यन्ताः एकैकस्योपरि ज्ञेयाः । मध्ये परमपुरुषाय नमः । आधाररूपिण्यै शक्त्यै नमः । विष्णु-कूर्माय तत्पुच्छाश्रिताय वायुकूर्माय नमः । वायुरूपकूर्म-

पुच्छाश्रितानन्तनामकशेषाय नमः । तत्फणाश्रितपृथिव्यै नमः । क्षीरसागराय नमः । रमारूपश्वेतद्वीपाय नमः । तत्र रमारूपाय महते दिव्यरत्नमण्डपाय नमः । तन्मध्ये रमारूपकन्दनालसहित पद्माय नमः। ओं सूर्यमण्डलाय नमः । ओं सोममण्डलाय नमः । ओं हुताशनमण्डलाय नमः ।

एवं सूर्यादीन् त्रीन् आसन उपर्युपरि ध्यायेत् । तथा पद्मभूमिषट्कोणेषु अग्रेतनदक्षिकोणे सूर्याय नमः । वामकोणे सोमाय नमः । देवसन्मुखकोणे हुताशनाय नमः । देवस्य वामभागकोणे सत्वात्मिकायै श्रियै नमः । दक्षिणकोणे रजोभिमानिन्यै विनतादेवतायै भूम्यै नमः । देवस्य पृष्ठभागकोणे उपबर्हणरूपायै दुर्गायै नमः ।

सोमपानस्थले पूर्वादिचतुर्दिक्षु । आत्मने नमः । अन्तरात्मने नमः । परमात्मने नमः । ज्ञानात्मने नमः ।

कमलाष्टपत्रेषु पूर्वाद्यष्टदिक्षु । विमलायै नमः । उत्कर्षिण्यै नमः । ज्ञानायै नमः । क्रियायै नमः । योगायै नमः । प्रह्व्यै नमः। सत्यायै नमः । ईशानायै नमः । मध्ये अनुग्रहायै नमः ।

अग्निमण्डलोपरि तमोऽभिमानिन्यै दुर्गायै नमः। रजोऽभिमानिन्यै धरायै नमः । सत्वाभिमानिन्यै श्रियै नमः । तदुपरि हरेः सूर्यस्य वामकोणे सोमस्य देवस्य सन्मुखकोणे हुताशनाय नमः । देवस्य वामभागकोमे सत्वात्मिकायै नमः । योगपीठस्वरूपात्मने श्रीमदनन्ताय नमः । तदुपरि सत्वाद्यात्मकरसरूपचित्रासनायै नमः। इत्युक्त्वा ।

तत्र बृहत्कलशमभिषेकार्थं स्थापयित्वा पूजयेत् । 'कलशस्य मुखे विष्णुः .'। 'आयान्तु देवपूजार्थं दुरितक्षयकारकाः' इत्युक्त्वा ।

निर्विषीकरणार्थं तार्क्ष्यमुद्रां प्रदर्श्य । अमृतीकरणार्थं धेनुमुद्रां प्रदर्श्य । पवित्रीकरणार्थं शंखमुद्रां प्रदर्श्य । संरक्षणार्थं चक्रमुद्रां प्रदर्श्य । दिग्बन्धनार्थं गदामुद्रां प्रदर्श्य । संशोधनार्थं पद्ममुद्रां प्रदर्शयेत् ।

मुद्रालक्षणम् -

हस्तौ तु विमुखौ कृत्वा ग्रन्थयित्वा कनिष्ठिकाम् ।
एषा गरुडमुद्रा स्यादघसर्पविनाशिनी ।।१।।
हस्तद्वये त्वधो कृत्वा संमुखे च परस्परम् ।
वामाङ्गुलीर्दक्षिणस्य चाङ्गुलीनां च सन्धिषु ।।
प्रदर्श्य मध्यमाभ्यां तु तर्जन्यौ द्वौ प्रयोजयेत् ।
कनिष्ठे द्वेऽनामिकाभ्यां संयुक्ता धेनुमुद्रिका ।।२।।
वामाङ्गुष्ठं तु संगृह्य दक्षिणेन तु मुष्टिना ।
कृत्वोत्थानं तथा मुष्टिमङ्गुलं तु प्रसारयेत् ।।
वामांगुल्यस्तथाश्लिष्टाः संयुक्ताः सुप्रसारिताः ।
दक्षिणांगुष्ठसंस्पृष्टा मुद्रा शंखस्य चोदिता ।।३।।
हस्तौ तु संमुखं कृत्वा संलग्नौ सुप्रसारितौ ।
कनिष्ठांगुष्ठकौ लग्नौ मुद्राचक्रस्य सिद्धिदा ।।४।।
अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रन्थिताङ्गुली ।
अङ्गुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते ।
गदामुद्रेयमाख्याता पुरा युक्तिकरी तथा ।।५।।

करौ तु संहतौ कृत्वा संहता उन्नताङ्गुली ।
तत्रान्तर्मिलिताङ्गुष्ठौ कुर्यादेवाब्जमुद्रिका ।।६।।

बृहत्कलशे -

एकपंचाशद्वर्णानां चतुर्विंशतिमूर्तयः ।
आत्माद्या वासुदेवाद्या विश्वाद्या मच्छकच्छपौ ।।
क्रोडो नृसिंहः सबटुर्जामदग्न्यरघूद्वहौ ।
वासिष्ठयादवौ कृष्णौ आत्रेयौ बुद्धकल्किनौ ।।
शिंशुमारश्चेति शतं कलाः कलशदेवताः ।।

अजादिशिंशुमारान्ताः मूर्तीः आवाह्य ।

द्वितीयकलशे -

शिंशुमारं कल्किबुद्धौ दत्तात्रेयं च कृष्णकं ।
वेदव्यासं रामचन्द्रं भार्गवं वामवनं तथा ।।
नारसिंहं वराहं च कूर्ममत्स्यौ तुरीयकम् ।
संकर्षणं वासुदेवं ज्ञानात्मपरमात्मकौ ।।
अन्तरात्मानमात्मानं कृष्णं हरिमुपेन्द्रकम् ।
जनार्दनाच्युतौ नारसिंहाधोक्षजकौ तथा ।।
पुरुषोत्तमानिरुद्धौ प्रद्युम्नं वासुदेवकम् ।
संकर्षणं वामकुक्षिं पद्मनाभं हृषीकपम् ।।
श्रीधरं वामनं च त्रिविक्रमं मधुसूदनम् ।
श्रीविष्णुं चैव गोविन्दं माधवं तदनन्तरम् ।।
नारायणं केशवं च नारसिंहं च लालुकम् ।

हंसं सारात्मरूपं च षड्गुणं शान्तसंविदम् ।।
वरं लक्ष्मीपतिं रामं यज्ञं मनुभगं तथा ।
फलिनं बलिरूपं च परमन्यं च धन्विनम् ।।
दण्डिनं थबतारौ च आत्मानं ढरिणं तथा ।
डरकं ठरकं टंकिं यमौ श्रीझाडितारिणम् ।।
जनार्दनं ततो छन्दोगम्यं चार्वङ्गिनं तथा ।
ङसारं घर्मो गरुडासनं श्रीखपतिं तथा ।।
कपिलं चार्यगर्भान्तावौरसौजोभृदैरकान् ।
एकात्मानं लृजिलृशमृघमृतुम्भरं तथा ।।
ऊर्जोग्रेशेन्द्रानन्दाजान्नारायणमथापरम् ।
एतान्देवानाह्वयामि पूर्णकुम्भोदके शुभे ।।

इत्येकोत्तरशतमूर्तीः आवाह्य । बृहत्कलशकुम्भस्थदेवेषु तत्त्वन्यास-मातृकान्यासौ कृत्वा । नारायणाष्टाक्षरस्य वर्णन्यासं कृद्धोल्कादि पंचांगन्यासं उद्यद्भास्वेति ध्यानं च कृत्वा नारायणाष्टाक्षरेण प्रत्येकं पुरुषसूक्तषोडशऋग्भिर्वा प्रत्येकमावाहनं अर्घ्यपाद्याचमनीयं मधुपर्कं पुनराचमनीयं स्नानं वस्त्रं यज्ञोपवीतं आसनादिगन्धपुष्पतुलसी-समर्पणं कृत्वा कलशयोरावरणपूजा कार्या ।

मध्ये । ओं परमपुरुषाय नमः । वामे ओं लक्ष्म्यै नमः। दक्षिणे ओं धरायै नमः ।

पूर्वाद्यष्टदिक्षु । ओं कृद्धोल्काय नमः। ओं सहस्रोल्काय नमः । ओं महोल्काय नमः । ओं वीरोल्काय नमः । ओं द्युल्काय नमः । ओं सहस्रोल्कायेति चतुर्वारं । इति द्वितीयावरणम् ।।

तद्वबहिः पूर्वाद्यष्टदिक्षु । ओं वासुदेवाय नमः । ओं मायायै नमः । ओं संकर्षणाय नमः । ओं जयायै नमः । ओं प्रद्युम्नाय नमः । ओं कृत्यै नमः । ओं अनिरुद्धाय नमः । ओं शान्त्यै नमः । इति तृतीयावरणम् ।।

तद्वहिः एवमेव अष्टदिक्षु दिशि दिशि द्वौ द्वौ कोणे कोणे त्वेकैकमिति केशवादि द्वादशावरणम् । एवं संकर्षणादि द्वादशा-वरणं वा ज्ञेयम् । एदं चतुर्थावरणम् ।।

तद्वहिः एवमेवाष्टदिक्षु । मत्स्याय नम इत्यादि ।।१०।। अनन्ताय नमः। विश्वरूपाय नमः ।।१२।। इदं पंचमावरणम् ।।

तद्वहिः अष्टदिक्षु । अनन्ताय नमः । वारुण्यै नमः । ब्रह्मणे नमः सरस्वत्यै नमः । वायवे नमः भारत्यै नमः । ईशानाय नमः । गिरिजायै नमः । देवस्याग्रे वीशाय नमः । तद्वामे सौपर्ण्यै नमः । षष्टमावरणम् ।।

तद्वहिः पूर्वाद्यष्टदिक्षु । पूर्वदिक्पतये सुराधिपतये सभार्याय सपुत्राय इन्द्राय सांगाय सायुधाय सवाहनाय सपरिग्रहाय श्रीविष्णुपार्षदाय नमः । अग्नये तेजोऽधिपतये सभार्याय सपुत्राय सांगाय सायुधाय सवाहनाय सपरिग्रहाय श्रीविष्णुपार्षदाय नमः । धर्माधिपतये धर्माय सभार्याय ० । रक्षोधिपतये निऋतये

सभार्याय ० । जलाधिपतये वरुणाय ० । प्राणाधिपतये वायवे ० । नक्षत्राधिपतये सोमाय सभार्याय ० । भूताधिपतये रुद्राय ० । निऋतिवरुणयोर्मध्ये अधोलोकाधिपतये नागाधिपतये शेषाय सभार्याय ० । इन्द्रईशानयोर्मध्ये सर्वलोकाधिपतये ब्रह्मणे सभार्याय ० ।।

इत्यावरणदेवताभ्यो अर्घ्यपाद्याचमनीयं मधुपर्कं पुनराचमनीयं वासो विभूषणं उपवीतमासनं गन्धपुष्पादि समर्पयामीति अर्घ्यादिकं दद्यात् ।।

ततः कलशकुम्भदेवताभ्यः धूपदीपनैवेद्यान् पुनर्धूपनीराजनं इत्यादि मूलमन्त्रेण दद्यात् ।

ततः पुष्पाञ्जलिं दत्वा कलशं प्रार्थयेत् ।

कलशः कीर्तिमायुष्यं प्रज्ञां मेधां श्रियं बलम् ।<br>
योग्यतां पापहानिं च पुण्यवृद्धिं च साधयेत् ।।<br>
सर्वतीर्थमयो यस्मात्सर्वतीर्थमयो यतः ।<br>
अतो हरिप्रियोऽसि त्वं पूर्णकुम्भ नमोऽस्तु ते ।।

'यस्य स्मृत्या चे'ति हरौ समिर्पयेत् ।

## ।। ततः शंखपूजा ।।

कलशोदकं शंखे संपूर्य । तुलसीं निक्षिप्य । शंखं चन्द्रार्कदैवत्यं० । त्रैलोक्ये यानि० । यः स्नापयति गोविन्दं तस्य पुण्यमनन्तकम् । इति पठित्वा ।

ध्यानमावाहनं सार्घ्यं पाद्यं च मधुपर्कयुक् ।
पुनराचमनं गन्धं पुष्पं चेत्यष्टपूजनम् ।।

शंखपृष्ठेन तोयं तु देवोपरि न निक्षिपेत् । शंखमूले चक्रमुद्रां शंखमध्ये धेनुमुद्रां शंखाग्रे शंखमुद्रां प्रदर्श्य । यस्य स्मृत्या चेति हरौ समर्पयेत् ।।

ततः षट्पात्राणि प्रस्थाप्य । विष्णुगायत्र्या षट्पात्रेषु उदकं संपूर्य । 'नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्' ।।

अर्घ्यं वायुपदे प्रोक्तं नैऋत्यां पाद्यमेव च ।
ईशे त्वाचमनीयं च आग्नेये मधुपर्ककम् ।।
पुनराचमनं मध्ये स्नानपात्रं तथैव च ।
अर्घ्ये श्रिया समायुक्तं पाद्यपात्रे सरस्वतीं ।।
रतीमाचमनीये [१] च मधुपर्के पितामहम् ।
शान्तिं च पुनराचामेत्स्नानीये वरुणं स्मरेत् ।।
अर्घ्ये तु दानमुद्रां च पाद्ये चांजिलमुद्रिकाम् ।

---

१. भारतीमाचमनीये चेंति कुत्रचित् ।

गोकर्णमुद्रां चाचामे मधुपर्के तु सूकरीम् ।।
पुनराचमने स्नाने हंसमुद्राः प्रकीर्तिता ।।
तेषु गन्धपुष्पादिकं समर्प्य ।

ततः पंचामृतस्नानार्थं पंचपात्राणि स्थापयेत् ।
मध्ये क्षीरं तु दध्यादि न्यसेत्पूर्वादिषु क्रमात् ।
दुग्धे तु देवो गोविन्दः दधिवामनदैवतम् ।।
आज्यं तु विष्णुदैवत्यं मधौ च मधुसूदनम् ।
शर्करे चाच्युतं विन्द्यात्ताः पंचामृतदेवताः ।।
पञ्चामृतदेवतादिभ्यः कलशवत् पञ्चमुद्राः प्रदर्शयेत् । पंचामृत-देवताभ्यो गन्धपुष्पतुलसीदलानि निधाय । मूलेनाष्टवारमभि-मन्त्र्य । नमस्कृत्य । विष्णुगायत्र्या अभिमन्त्र्य ।

ततः शालग्रामादिप्रतिमायां आवाहनार्थं पूर्ववत्पीठपूजां कुर्यात् ।
चतुष्कोणं तु पीठं स्यात् षट्कोणं तस्य मध्यतः ।
कर्णिकायां न्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरम् ।।
तन्मध्येऽष्टदलं पद्मं तत्र पद्मे समर्चयेत् ।।
पूर्ववत्पीठपूजां कृत्वा पीठस्थप्रतिमायां तेजोमयीं प्रतिमां ध्यात्वा तत्र मुख्यप्राणं ध्यात्वा तत्र स्वबिम्बरूपं हरिमावाहयेत् ।
तत्प्रकारस्तु - विष्णोरासनभूताय दिव्यरत्नमयाय च ।
प्रधानपुरुषेशाय महापीठाय ते नमः।।
कुण्डलरूपेणासनरूपाय उपबर्हणछत्ररूपाय हरेर्योगपीठस्वरूपा-

त्मने श्रीमनदनन्ताय नमः। इति पीठदेवतामावाह्य ।

अर्घ्यं पाद्यं त्वाचमनं साचामं मधुपर्ककम् ।
स्नपनं वसनं चैव गन्धपुष्पे विभूषणम् ।।
ईशे तानुपचारांस्तु सर्वेभ्यस्तु पृथग्वदेत् ।
अंगाद्यावरणस्थेभ्यः स्वाहान्तैः स्वस्वनामकैः ।।
आसनादि तु पीठस्थदेवानां विष्णुना सह ।
धूपदीपादिकं सर्वं सर्वेभ्यो विष्णुना सह ।।

सुषुम्नानाडीस्थं अधोमुखं हृत्कमलं वायुबीजेनोन्मुखीकृत्य विज्ञानेन प्रकाश्य तत्कर्णिकायां स्थितं श्रीमन्नारायणं 'उद्यद्भास्वदि'ति ध्यात्वा तुलसीपुष्पाणि गृहीत्वा ।

हृदयस्था हरेर्मूर्तिर्जीवो यत्प्रतिबिम्बकः ।
यद्वशे वर्तते जीवः सा तु जीवकला स्मृता ।।

आत्मार्थं । आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः। घोषा यदशृण्विरेऽनुरूपं तस्मै वाताय हविषा विधेम । इति ऋचामूलेन सह ।

परार्थं । सूर्यान्तर्गतश्रीमन्नारायणं ।

'ध्येयः सदा ...धृतशंखचक्र' इत्यादिना ध्यात्वा 'सहस्रशीर्षे'ति ऋक् ।

एह्येहि मम हृत्पद्मस्थित श्रीपुरुषोत्तम ।
आवाहयामि पीठेऽस्मिन् प्रतिमायां रमापते ।।
भो स्वामिन्जगतां नाथ यावत्पूजावसानकम् ।

तावत्संप्रीतिभावेन प्रतिमायां स्थिरो भव ।।

'भोः स्वामिन् ममान्तर्गत मुख्यप्राणान्तर्गत श्रीलक्ष्मीनारायण' इत्युक्त्वा आवाहनमुद्रया पीठस्थप्रतिमायां 'आवाहयामी'ति द्विरुच्चारयेत् ।

आवाहनं स्थापनं च सांनिध्यं सन्निरोधनम् ।
सन्मुखीकरणं चैव अवगुण्ठनमेव च ।।

इति षण्मुद्राः प्रदर्शयेत् । प्रत्येकमूलमन्त्रेण तत्तन्मुद्रया 'आवाहितो भव प्रार्थितो भव प्रसन्नो भव' ।

शालग्रामे स्वयं व्यक्ते नावाहनविसर्जने ।
चक्रांकिते स्वयं व्यक्तप्रतिमायां च पुस्तके ।।
शालग्रामादि संस्थाप्य ध्यायेद्बिम्बेन चैकताम् ।।

।। मुद्रालक्षणम् ।।

हस्ताभ्यामंजली कृत्वाऽनामिकामूलपर्वणोः ।
अंगुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी मता ।।
अधोमुखं त्वियं चेत्स्यात्स्थापनी मुद्रिका मता ।
उच्छ्रितांगुष्ठमुष्ट्यैश्च संयोगात्संनिधायिनी ।।
अन्तप्रवेशितांगुष्ठौ सा वै संरोधनी मता ।
हस्तौ तु संमुखौ कृत्वा मुष्टीकृत्वा विगुण्ठयेत् ।।
तयोरुपरि चांगुष्ठौ निक्षिपेद्विवृतौ तथा ।
अवगुण्ठनमुद्रेयं सर्वकामफलप्रदा ।।

मुष्टिद्वयस्थितांगुष्ठौ सन्मुखौ च परस्परम् ।
संश्लिष्ट उच्छ्रितौ कुर्यात्सेयं संमुखमुद्रिका ।।
प्रसृतांगुलिकौ हस्तौ मिथः श्लिष्टावसंमुखौ ।
कुर्यात्स्वहृदये सेयं मुद्रा प्रार्थनसंज्ञिका ।।
उत्तानो तु करौ कृत्वा प्रसार्य हृदयस्थितौ ।
प्रसादमुद्रा विज्ञेया सर्वदेवप्रसादिनी ।।

## ।। ततः सांनिध्यप्रार्थनं ।।

सान्निध्यं कुरु देवेश सर्वसंपत्करो भव ।
त्वां भक्त्या पूजयाम्यद्य भोगैरर्घ्यादिभिः क्रमात् ।।
विभो सकललोकेश कृष्ण विष्णो हरे प्रभो ।
यागावसानपर्यन्तमत्र स्थित्वा जनार्दन ।।
भक्तस्य मम पूजां त्वं गृहीत्वा पाहि मां विभो ।।
प्रतिमायां मातृकान्यासतत्त्वन्यासौ अष्टांगन्यासादींश्च कृत्वा सन्निधानजपं कुर्यात् ।

ततः पादुके समर्प्य । स्नानपीठमागच्छेत्युक्त्वा । 'उत्तिष्ठ ब्रह्मणस्पते' इति उत्थाप्य, 'भद्रं कर्णेभिः' इति स्नानपीठे उपवेश्य, मूलमन्त्रेण मृत्तिकाशौचं गण्डूषान् दन्तकाष्ठं मुखप्रक्षालनं च कारयित्वा । दर्पणं च प्रदर्श्य । 'आपो हिष्ठे'त्यर्घ्यं । 'आपः पुनन्त्वि'ति पाद्यम् । 'शंनो देवी'त्याचमनं । गायत्र्या मधुपर्कम् । 'शंनो देवी'ति पुनराचमनम् ।

मूलमन्त्रेण मलापकर्षणस्नानम् । 'आप्यायस्वे'त्यादिभिः पंचामृतस्नानं कृत्वा । 'आपोहिष्ठे'ति शुद्धोदकस्नानं कारयित्वा **महाभिषेकं कुर्यात् ।**

शालग्रामाः समाः पूज्याः विषमा न कदाचन ।
एकस्तु विषमे पूज्यः समेषु द्वितीयं न तु ।।
चक्रांकं मिथुनं पूज्यं नैकचक्रांकमर्चयेत् ।
चक्रांकं मिथुनं पूज्यं शालग्रामं प्रति प्रति ।।

आत्वाहर्षसूक्तं घर्मसूक्तं वैष्णवसूक्तं विश्वकर्मीयं समुद्रसूक्तं पावमानीयं पुरुषसूक्ताणुभाष्यनारायणवर्मब्रह्मसूत्राष्टमहामन्त्रैः बृहत्कलशोदकेन शंखेनाभिषेकं कृत्वा ततः कुम्भेनैवाभिषेकं कुर्यात् ।

शिंशुमारादिकान् पूर्वं आह्वयेत्कलशे सुधीः ।
अजादिमूर्तिभिः प्राज्ञ अभिषेकं समाचरेत् ।।

ततः अभिवस्त्रेति सम्पुटे वस्त्रं प्रसार्य तत्र तुलसीपत्राणि आस्तीर्य शालग्रामचक्रांकितानि निधाय ।

अनेकरत्नसंयुक्तां तुलसीदलसंयुताम् ।
विष्णुवक्षःस्थले मालां वैजयन्तीत्युदाहृताम् ।।

मूलेन वैजयन्तीमालां समर्पयामि । एवं सर्वेषूपचारेषु मूलमन्त्रो ग्राह्यः ।

देदीप्यमानचन्द्रार्कज्वालाकोटिसमप्रभम् ।
विष्णुवक्षःस्थले भ्राजत्कौस्तुभं तु समर्पयेत् ।।

श्रीवत्सं चूडामणिं यज्ञोपवीतं आसनं आयुधानि गन्धं च समर्प्य अष्टमहामन्त्रैः तुलसीपुष्पाणि समर्पयेत् । केशवादिनामानि

मत्स्यादिनामानि विश्वादिनामानि च पठेत् ।

तत आवरणपूजां कृत्वा धूपं दद्यात् । वनस्पत्युद्भवो० ।

ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिंचिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपालभवाब्धिपोतं
वन्दामहे पुरुष ते चरणारविन्दम् ।।

नारायणाय परिपूर्ण० नमो नमस्ते ।।
आसीदुदारगुण० निमेषकान्ते ।।
नारायणं सुरगुरुं ० ।।
जयति हरि०।। श्रीपतिर्मानदो नः।।
श्रीनारसिंह जयनारसिंह जय नारसिंह जय हरे ।।

धूपं समर्पयामि । ततः आचमनं समर्पयामि । साज्यं त्रिवर्ति-संयुक्तं०। दिन्यज्योतिर्नमोऽस्तु ते । ब्राह्मणोऽस्य मुखमासीत् । शूद्रो अजायत ।। जय विठ्ठल जय विठ्ठल श्रीलक्ष्मीनारायणाय नमः।। दीपं समर्पयामि ।।

## ।। अथ नैवेद्यम् ।।

वन्दे वन्द्यं सदानन्दं इति द्वादशस्तोत्रं पठित्वा । देवस्य पुरतो दक्षिणे भागे चतुरस्रमण्डलोपरि अष्टदलपद्यं लिखित्वा । नैवेद्यं संस्थाप्य । अपरस्मिन्मण्डले लवणव्यंजनादि संस्थाप्य ।

तुलसीदलं नैवेद्ये निक्षिप्य । तत्समीपे पानीयं अनुयागार्थं घृतं च निधाय । पृथगुदकं शंखे निधाय । ताक्ष्यादिमुद्राः प्रदर्श्य । विपुलीकरणार्थं धेनुमुद्रां शीतलार्थं चन्द्रमुद्रां प्रदर्श्य । मूलमन्त्रेण द्वादशवारमभिमन्त्र्य ।

अद्य तिष्ठति यत्किंचित्कल्पितं चापरं गृहे ।
पक्कमन्नं सुपानीयं सर्वोपस्करसंयुतम् ।।
यथाकालं मनुष्याद्यैर्भोक्ष्यमाणं शरीरिभिः ।
तत्सर्वं विष्णुपूजास्तु प्रीयतां मे जनार्दनः ।।

सौवर्णे स्थालिवर्ये मणिगणखचिते गोघृताक्तान् सुपक्कान्
भक्ष्यान् भोज्यांश्च लेह्यानपि सकलमहञ्चोष्यमाणं निधाय ।
नानाशाकैरुपेतं समधुदधिघृतं क्षीरपानीययुक्तं
ताम्बूलं चापि विष्णोः प्रतिदिवसमहं मानसे चिन्तयामि ।।

भोजं त्वामिन्द्रवहं हुवेममदधिष्वमिन्द्रापासिवाजान् ।
अविढीन्द्रचित्रया न दुतीकृधिवृषन्निन्द्रवस्यसो नः ।।
चन्द्रमा मनसो जातः०।। द्यौः समवर्तत ।।

श्रीनिवास नमस्तुभ्यं महानैवेद्यमुत्तमम् ।
संगृहाण सुरश्रेष्ठ भुक्तिमुक्तिप्रदायक ।।

सत्यं त्वर्तेन परिषिंचामि । अमृतोपस्तरणमसीति देवस्य दक्षिण-हस्ते आपोशनं लक्ष्मीहस्तेन दत्वा तदुदकं दक्षिणभागे पात्रान्तरे क्षिपेत् ।

सुधारसं सुविपुलं आपोशनमिदं तव।
गृहाण त्वं सुरश्रेष्ठ यथेष्टमुपभुंजताम् ।।

- इति ।

अमृतोपस्तरणमसि । प्राणात्मने अनिरुद्धाय स्वाहा । अपानात्मने प्रद्युम्नाय स्वाहा । व्यानात्मने संकर्षणाय स्वाहा । उदानात्मने वासुदेवाय स्वाहा । समानात्मने श्रीनारायणाय स्वाहा । ब्रह्मणे स्वाहा ।

त्वं सर्वयज्ञभोक्ता त्वं सर्वान्तर्यामी सर्वगः।
त्वमेव जगदाधीशः त्वदधीनस्त्वदाज्ञया ।।
परिवेषयती यं श्रीः मुख्यप्राणस्तु वीजयेत् ।
भारत्याद्याः परिचरन्ति त्विन्द्राद्या द्वारपालकाः।।

मध्ये मध्ये पानीयं समर्पयामि । देवस्य पवित्रान्नशाकादिकं समर्पणीयं । 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत्' इति भाष्योक्तेः।

तानि निषिद्धानि हारीते चोक्तानि -

भाषादुष्टं क्रियादुष्टं जातिदुष्टिमिति त्रिधा ।
संसर्गकालदुष्टं च वर्जयेद्दुष्टपंचकम् ।।
रूपाद्दुष्टं क्षयाद्गन्धाद्भावाद्दुष्टं प्रकीर्तितम् ।
आरनालं च मध्यं च करनिर्मथितं दधि ।।
हस्तदत्तं च लवणं क्षीरं घृतजलान्वितम् ।
ताम्रपात्रे तु यद्द्रव्यं क्षीरं लवणमिश्रितम् ।।

ओदनं च पुनः पक्कं तिलपिष्टं च भिस्सटम् ।
निर्यासांश्च विना हिंगुं श्वेतं च बृहतीफलम् ।।
वंशांकुरौदुम्बरे च तथा श्लेष्मतकीफलम् ।
उपोदकी ह्यलाम्बुश्च पलाण्डुश्च मसूरकाः ।।
इति प्रोक्ताः क्रियादुष्टं जातिदुष्टमथोच्यते ।
अलाम्बुं छत्रवृन्ताकं बिम्बकोशातकीफलम् ।।
लशुनं गृंजनं शिग्रुं निष्पावांश्च कलिंगकान् ।
श्वकाकपुंश्चलीभिस्चि उदक्या सूतकादिभिः ।।
दृष्टं स्पष्टं च दत्तं च भुक्तशेषं तथैव च ।
अभक्ष्येण च संयुक्तं संसर्गाद्दूषितं हि तत् ।।
चातुर्मास्येषु शाकादिभोजनं हरिवासरे ।
भोजनं तर्पणं श्राद्धं करणं कालदूषितम् ।।
- इति ।

रूपाद्दुष्टं मांसतुल्यं रूपयुक्तत्वाद्बम्बफलम् । क्षयात् नाशात् । गन्धात् दुर्गन्धात् । अलाम्बु द्विविधमपि नातिदुष्टम् । एकं कन्नडभाषायां हालुकुम्बलकायीत्युच्यते। द्वितीयं रामकुम्बलकायि । त्यनगु [1]भाषायां तु उभयोः आनग [2]यु कायि राजगुंमडिकायेति । महाराष्ट्रभाषायां भोपळा ।

---

१. तैलंगभाषायामित्यन्येषु ।

२. आनिग्युपकायो राजनिग्युपयीत्यन्यत्र पुस्तके ।

खुरासानिभोपळेति । अपसव्यभाषया कडूखुरासनीति । मदन-विनोदे वैद्यनिघण्टौ तु अलाम्बुराजालाम्ब्विति । 'तुम्बीमिष्टा महा-तुम्बी राजालाम्बुरलाम्बुनि' ।

कोशातकीफलं द्विविधं घृतकोशातकी शिरारहिता । शिरा-युक्ता चान्या इति । क्वचित्क्वचिद्वाक्ये विशेषोक्तिर्वर्तते । तथाऽपि व्रन्ताकादीनां सामान्यतोऽग्राह्यत्वम् । शाकेषु परिगणनाभावात् । सामान्यतः शाकचतुष्टयजात्यवच्छिन्नं त्याज्यमिति प्रतीयते । एवं अन्यान्येऽपि त्याज्यानि । धान्यशाकादीनि पुराणादावुक्तानि ज्ञेयानि ।

स्वस्य देवस्य मध्ये वस्त्रं धृत्वा देवस्य भोजनपर्यन्तं अष्टोत्तरं मूलेन जपेत् । तदनन्तरमनुयागं कुर्यात् । ततः धूपदीपसमर्पणा-त्प्रागेव मूलग्रन्थोक्तलक्षणे कुण्डे स्थण्डिले वा स्वसूत्रोक्तप्रकारेण-अग्निं प्रतिष्ठाप्य । अन्वाधानाद्याज्यसंस्कारं कृत्वा वैष्णवाग्निं सिद्धं कृत्वा इध्माधानाज्यभागान्तं हुत्वा उक्तप्रकारेण पीठपूजां कृत्वा । तत्र अग्न्यन्तः भारतीरमणान्तर्गतहरिणीपतिपरशुराममावाह्य पाद्या-वरणान्तोपचारं कृत्वा देवेन सह धूपदीपौ दत्वा देवाय नैवेद्यं समर्प्य नैवेद्यकाले होमार्थं पृथक्कृत्य नैवेद्येन सह स्थापितघृतान्नाद्यैश्च मूलमन्त्रेणाष्टोत्तरशतं सकृत्पुष्पांजलिपूर्वकं पीठावरणदेवताभ्यश्च चतुराज्याहुतीः दत्वा स्विष्टकृदादिप्रायश्चित्तान्तं हुत्वा अमृतापिधा-नमसीति उत्तरापोशनं दत्वा नैवेद्यं विसर्जयेत् ।

अथ हस्तप्रक्षालनं मुखप्रक्षालनं मूलेन दत्वा ।

चन्दनं च सकर्पूरं कस्तूर्यादिसमन्वितम् ।

करोद्वर्तनकं देव प्रीत्यर्थं प्रतिगृह्यताम् ॥

इति करोद्वर्तनं समर्पयेत् । विष्वक्सेनाय शतांशं दत्वा । नैवेद्यशेषं विष्वक्सेनाधीनं कृत्वा देवस्य वामभागे स्थापयित्वा तत्स्थलं मूलमन्त्रेण प्रक्षालयेत् । 'भो देव सिंहासनमागच्छे'ति विज्ञाप्य मूलेन त्रिवारं तुलसीदलं समर्पयेत् ।

पूगीफलसमममायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

नाभ्यामासीदन्तरिक्षं० ताम्बूलं समर्पयामि ॥

हिरण्यरूपं सहिरण्यसंदृगपान्नपात्सेदुहिरण्यवर्णः ।

हिरण्ययात्परियोनेर्निषद्या हिरण्यदाददत्यन्नमस्मै ॥

इति सुवर्णपुष्पम् ॥

'जयत्यजोऽखण्ड' इति पुनर्धूपं दत्वा उपचारेषु मध्ये हस्तं प्रक्षाल्य अर्चितप्रार्चितेत्यादिमन्त्रैः गोघृताक्तवर्तिकाभिः तिलतैलाक्ताभिर्वा दीपसंयुक्तादिभिः चतुरष्टांगुलोत्सेधे आपादतलमस्तकं त्रिः भ्रामयेत् देवस्य वामभागे विसर्जयेत् । इति कर्पूरनीराजनानि च कृत्वा मध्ये मध्ये श्रीतुलसीं द्विस्त्रिर्वा समर्प्य मन्त्रपुष्पं मूलेन 'नमो महद्भ्यः' इत्यादि मन्त्रैश्च समर्पयेत् ।

ततः शुद्धोदकेन शंखं प्रपूर्य तुलसीं स्थापयित्वा मुद्राः प्रदर्श्य मूलेनाष्टवारं अभिमन्त्र्य ।

'इमा आपः शिवतमा इमा सर्वस्य भेषजीः । इमा राष्ट्रस्य

वर्धनीरिमा राष्ट्रभृतो मृताः ।। इमा आपः शुद्धाः शीतलाः सन्तु पूताः सूर्यस्य रश्मिभिः।।' इति देवस्य पादादिमुकुटपर्यन्तं एकवारं देवस्य नाभ्यादिमुकुटपर्यन्तं द्वितीयवारं तथा हृदयादिमुकुटपर्यन्तं तृतीयवारं प्रदक्षिणेन भ्रामयित्वा पात्रान्तरे स्थापयेत् ।

आरोपयेत्ततो वह्निं हृत्पद्मे मूलमन्त्रतः ।
प्रताप्य दक्षिणं हस्तं मुखेनाकृष्यवायुना ।।

ततो रमाब्रह्मादिसनकादिहरिभक्तपूजा । विष्णोस्तु पुरतो नैव ह्यन्यस्य प्रतिमां पूजयेत् ।

वर्जयित्वा हनूमन्तं शेषं गरुडमेव च ।
विष्वक्सेनस्य गरुडब्रह्मादीनां विशेषतः ।।
मम तीर्थादिकं सर्वं नैवेद्यं च समर्पयेत् ।।

\- इति पाद्मे ।

तत्र रमायाः विष्वक्सेनहरिभक्तानां च पात्रान्तरे आवाह्य तीर्थान्तरे पूजनं बोध्यम् ।

रमाब्रह्मादयो देवाः सनकाद्याः शुकादयः ।
श्रीनृसिंहप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः ।।

'अहं रुद्रेभिः' 'बळित्थे'त्यादि पठेत् । स्तोत्रपाठादिपूर्वकं प्रदक्षिणनमस्कारान् कृत्वा पूजाषाड्गुण्यार्थं अष्टोत्तरशतं मूलमन्त्रं जप्त्वा देवे तत्वन्यासमातृकान्यासाष्टाक्षरन्यासपंचांगन्यासान् कृत्वा । 'आत्मा देवानां' 'यज्ञेन यज्ञमि'ति मन्त्रेण 'उद्यद्भास्वत्' इति ध्यात्वा आवाहनादिमुद्राव्यत्यासे 'निधाय एह्येहि' इति 'स्वहृदये

पुनरावाहयामि' इति पुनः स्वहृदये स्थापयेत् ।

याचेऽहं त्वां हृषीकेश नमामि पुरुषोत्तम ।
हृदये कुरु संवासं श्रिया सह जगत्पते ।।

इति प्रार्थयेत् । परदेवपूजायां रव्यादिमण्डले विसृजेत् ।

नाहं कर्ता हरिः कर्ता तत्पूजाकर्म चाखिलम् ।
तथापि मत्कृता पूजा त्वत्प्रसादेन नान्यथा ।।
न जाने कर्म यत्किंचिन्नापि लौकिकवैदिके ।
मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ।।
सर्वं करोति निश्छिद्रमनुसंकीर्तनं तव ।
त्वद्भक्त्या सफलं मह्यं त्वत्प्रसादः पुनः पुनः ।।
कर्मन्यासो हरेरेवं विष्णोस्तृप्तिकरः सदा ।
मादृशो न परः पापी त्वादृशो न दयापरः ।।
दासोऽयमिति मां मत्वा क्षमस्व पुरुषोत्तम ।
रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः ।।
शरणागतिरेषा स्याद्विष्णोर्मोक्षफलप्रदा ।
स्थितिः सेवा गतिर्यात्रा स्मृतिश्चिन्ता स्तुतिर्वचः ।
अहो सर्वात्मको विष्णुः सुधियां सर्वदान्वयः ।।

इति संप्रार्थ्य ।।

यस्य स्मृत्या चेति विष्णौ समर्पयेत् ।।

भरद्वाजसंहितायां -

शंखमध्ये स्थितं तोयं भ्रामितं केशवोपरि ।
अंगलग्नं मनुष्याणां ब्रह्महत्यायुतं दहेत् ।।

भरद्वाजसंहितायां -

वस्त्रं तु त्रिगुणीकृत्य तत्र पाणिं निधाय च ।
पाणौ पाणिं विधाय त्रिस्तुलसीमिश्रितं पिबेत् ।।
एकादश्यामेकवारं तीर्थं तु तुलसीं विना ।
आदौ धृत्वा ततः पीत्वा पुनः शिरसि धारयेत् ।।
शालग्रामजलं पीत्वा कोटियज्ञफलं लभेत् ।
तस्मादष्टगुणं पापं भूमौ तद्बिन्दुपातनात् ।।
निर्माल्यं नाभिशिरसो कर्णयोर्धारयेत्सुधीः ।।

इति देवपूजाविधिः।।

## ।। अथ वैश्वदेवः।।

तथा च पराशरः -

अकृत्वा वैश्वदेवं तु योऽन्नं भुङ्क्ते द्विजाधमः ।
स भुङ्क्ते हि कृमीन् सर्वान् काकयोनिषु जायते ।।
यदि स्याल्लौकिके पाकस्तत्रैवाग्नौ प्रहूयते ।
गृह्याग्नौ पचने चेत्स्याद्धोमं तत्रैव चाऽचरेत् ।।

- इति च ।

यस्मिन्नग्नौ पचेदन्नं तस्मिन्होमं समाचरेत् ।
वैश्वदेवे तु सर्वान्नं पवित्रं लवणं विना ।।

दत्वा विष्ण्वाहुतीः पूर्वं मन्त्रैरष्टाक्षरादिभिः ।
वैश्वदेवं प्रकुर्वीत अन्यथा किल्बिषी भवेत् ।।

व्यासः -

वैश्वदेवं प्रकुर्वीत स्वशाखाविहितं द्विजः ।
जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्जितम् ।।
दध्यक्तं पयसाभ्यक्तं तदभावेऽम्बुनापि वा ।
पयोदधिघृतैर्वापि वैश्वदेवं स्रुवेण तु ।।
हस्तेनान्नादिकं कुर्याज्जलैरंजलिना जलैः ।।

- इति ।

तच्छेषेऽपां बलिं दद्याद्वारिणा प्लावितेन हि ।
विना च कोद्रवं माषं चणकं च कुलित्थकम् ।।

- इति ।

उत्तानेन तु हस्तेन ह्यंगुष्ठाग्रयुतेन च ।
संहतांगुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ।।

- इति ।

यत्किंचिज्जुहुयादग्नौ तत्सर्वं त्यागपूर्वकम् ।
स्मरन्नग्निगतं रामं तत्तद्देवं सनामकम् ।।
अविभक्ता [१] विभक्ता वा पृथक्पाकं द्विजातयः ।
कुर्युः पृथक्पृथग्यज्ञं भोजनात्प्राक् दिने दिने ।।

---

१. अविभक्ता इति । यदि ते पृथक् पाकं कुर्युस्तर्हि यज्ञोऽपि पृथक् कार्यस्तैरित्यर्थः । एकेनैव न प्रतिपाकं कार्यः । मिताक्षरायां च - 'पुरुषार्थत्वे वैश्वदेवाख्यं कर्म न प्रतिपाकमावर्तनीयम् । तस्मादथ सायंप्रातरित्यादिनोत्पात्तप्रयोगो दर्शितो।' - इत्यादि ।

विभक्तानां तु पाकैक्ये ज्येष्ठ एव समाचरेत् ।
पुत्रो भ्राता तथा शिष्य ऋत्विक् श्वशुरमातुलाः ।।
पत्नी वा श्रोत्रियो ज्ञातिर्वैश्वदेवादिकर्मिणः ।
व्रीह्याद्यनेकद्रव्यस्य पाकश्चेदेककालतः ।
तदा पाकैकद्रव्यस्य वैश्वदेवादिके कृते ।।
सर्वस्यापि कृतं तत्स्यान्न पृथग्वैश्वदेवकम् ।
अन्नस्यापि हि सर्वस्य कृतं स्याद्वैश्वदेवकम् ।।

- इति ।

पूर्वं तस्य कृता देवा वैश्वदेवादिकर्मिणः ।
उत्तरस्यापि सर्वस्य कृतं स्याद्वैश्वदेवकम् ।।
वैश्वदेवं दिवा नित्यं प्रकुर्वन् भक्तिसंयुतः ।
रात्रौ होमं प्रकुर्वीत ये भूता मन्त्रतो बलिम् ।।
नान्यद्बलिहृतं रात्रौ यद्वा कुर्यादमन्त्रतः ।। - इति ।

रात्रौ होमं वैश्वदेवहोमं यथास्थितमन्त्रैः प्रकुर्वीत । बलिं बलिहरणं तु 'ये भूताः प्रचरन्ती'ति मन्त्रेणैव । अन्यद्बलिहृतिं अन्यदेवतामन्त्रेण बलिहरणमित्यर्थः ।

वैश्वदेवं यदा कुर्यात्स्वान्यो विप्रादिकस्तदा ।
अन्नसंस्कारमात्रार्थं न कुर्याद्बलिकर्म तु ।।

- इति ।

मृत्युरोगविनाशार्थं निराकारं बलिं हरेत् ।
व्यजनाकारमथवा बलिं विप्रो हरेद्ध्रुवम् ।।
आयुरारोग्यसौभाग्यपुत्रविद्यापशून् प्रति ।

कामी श्रीधर्ममोक्षार्थं [१] चक्राकारं बलिं हरेत् ।।
चक्राकारमथाष्टारं कुर्यादग्निसमीपतः ।
बदरीफलमात्रं तु घृतक्षीरादिमिश्रितम् ।।
अन्नं क्षिपेद् द्विजश्रेष्ठो भूमौ तद्बलिसंज्ञकम् ।
पूर्वां तु दिशमारभ्य चेशानावधिकं स्मृतम् ।।
दिवा भूमौ बलिं दद्याद्रात्रौ दद्याच्च पात्रके ।
हुतकारमथाग्नौ वा भिक्षां वा पुष्कलां द्विजः ।।
दद्यादतिथये नित्यं तत्स्थं ज्ञात्वा हरिं परम् ।
ग्रासमात्रं भवेद्भिक्षा पुष्कलं तच्चतुर्गुणम् ।।
चातुर्गुणे हन्तकारो ह्यग्रतस्त्रिगुणं भवेत् ।

नैवेद्यकरणे निषिद्धकाष्ठान्याह ।

अमेध्यगन्धकाष्ठानि निषिद्धानि तु यानि च ।
अन्तःप्राण्युपपन्नानि तानि सर्वाणि वर्जयेत् ।।
गव्यं पुरीषं शुष्कं तु शुद्धमग्नौ प्रदाहयेत् ।
तुलसीं विना वन्यकाष्ठैर्द्विजो वह्निं प्रदीपयेत् ।।
व्यजनेन धमन्या वा सान्तरेण मुखेन च ।।

- इति ।

एवं श्वकाकादिबलिं दद्यात् ।

---

१. कामी श्रीधर्ममोक्षार्थमिति । श्रीः सम्पत्तिः । धर्मः कर्तव्यकर्म । मोक्षश्च । एतदर्थमित्यर्थः ।

## ।। अथ भोजनम् ।।

तदुक्तमाचार्यैः -

भुक्तशेषं भगवतो भृत्यातिथिपुरःसरः ।
भुंजीत हृद्गतं विष्णुं स्मरन् तद्गतमानसः ।।

भृत्यः प्रेष्यः [१] पितृमातृशिष्यपुत्रादिः ।

अतिथिः -

अध्वश्रान्तो ह्यविज्ञातः क्षुत्पिपासायुतस्तथा ।
हरिभक्तो वैश्वदेवे अकस्मादागतस्तु यः।।
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ।।

इति स्मृत्युक्तो ज्ञेयः । पुरःसरशब्देन अभ्यागतो ज्ञेयः । भृत्यादीनां तेषां पूर्वभोजनं स्वापेक्षया संभवात् । हृद्गतं भृत्याद्यन्तर्यामिणं विष्णुं स्वस्य च स्मरन्नित्यर्थः ।

हारीतः -

बालवृद्धसुहृद्बन्धून् भृत्याख्यान् तदनन्तरम् ।
भोजयेच्च यथाशक्ति यथाकालं क्षुधान्वितान् ।। - इति ।
पाषण्डी पतितो वापि क्षुधार्तो गृहमागतः ।
नैव दद्यात्सुपक्वान्नं ग्रासमेकं प्रदापयेत् ।।
अकृते वैश्वदेवे तु भिक्षुको गृहमागतः ।
उद्धृत्य [२] वैश्वदेवार्थं भिक्षां दद्यान्निवेदयेत् ।

---

१. पोष्य इत्यन्यत्र ।

२. उद्धृत्येति। वैश्वदेवार्थमन्नं स्थाल्याः पृथक्कृत्य स्थालिस्थान्नभागो भिक्षवे देय इत्यर्थः।

वैश्वदेवाकृतं दोषं शक्तो भिक्षुर्व्यपोहितुम् ।।
यतिहस्ते जलं दद्याद्भैक्षं दद्यात्पुनर्जलम् ।
तदन्नं मेरुणा तुल्यं तज्जलं सागरोपमम् ।।
प्रतिमायामर्पितं तु नार्पयेत्प्रतिमान्तरे ।
अग्निविप्राद्यधिष्ठाने ह्यर्पयेद्विष्णवनुज्ञया ।।
प्रत्यङ्मुखः प्राङ्मुखो वा जान्वोरन्तःकरस्तथा ।
शुभे दारुमये पीठे समासीनः कुशान्तरे ।
अलाभे शुभपीठस्य केवलं कुशविष्टरे ।।

भोजनपात्रस्याधोमण्डलमाह । शंखः -

आदित्या वसवो रुद्राः ब्रह्मा चैव पितामहः ।
मण्डलान्युपजीवन्ति तस्मात्कुर्वीत मण्डलम् ।।
चतुरस्रं [१]त्रिकोणं च वर्तुलं चार्धचन्द्रकम् ।
वर्णानां ब्राह्मणादीनां मण्डलानि यथाक्रमम् ।।
स्वयं न मण्डलं कुर्यात् स्वार्थमन्येन कारयेत् ।
सुवर्णादिमयं पात्रं विशुद्धं कांस्यमेव च ।।
चतुःषष्टिपलं चैव कांस्यं मुख्यं प्रमाणतः ।
तदर्धं वाऽथपादं वा ततो हीनं विवर्जयेत् ।।
तदभावे तु भुंजीत शुभे पर्णमये द्विजः ।
मधुकं कुटजं ब्राह्मं जम्बु प्लक्षमुदुम्बरम् ।।

---

१. चतुरस्रमिति । ब्राह्मणादिवर्णानां यथासंख्यं ज्ञेयम् ।

कदलीपर्णकं चैव पालाशं पनसं तथा ।
श्रीपर्णं मातुलिंगं च शुभानीमानि भोजने ।।

- इति ।

वटार्काश्वत्थपर्णानि निषिद्धानि ।

वटार्काश्वत्थपर्णेषु यतिर्भुक्त्वा न दोषभाक् ।
रंभापत्रपलाशेषु यो भुङ्क्ते द्वादशीदिने ।।
सप्तजन्मार्जितं पुण्यं तत्क्षणादेव नश्यति ।
मार्जनं चार्चनं चैव बलिकर्म च भोजनम् ।।
देवतीर्थेन वै कुर्यात्प्राङ्मुखश्चासने स्थितः ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ।।

- इति ।

## ।। अथ परिवेषणम् ।।

पात्रेषु अभिघार्य ।

स्वयं वा स्त्रीजनो वाऽपि परिवेषणमाचरेत् ।
अदौ तु लवणं ज्ञेयं व्यंजनादिः ततः परम् ।।
शाकादिकं ततः सूपमन्नं पायसमेव च ।
भक्ष्यादिकं ततश्चान्ते घृतं तु परिवेषयेत् ।।
भोक्तुर्दक्षिणतो भक्ष्यं वामभागे तु पायसम् ।
परितो व्यंजनादीनि मध्येऽन्नं परिवेषयेत् ।।
ओदने परमान्ने च सूपे चैव सुमुग्धधीः ।
घृतेन पूरयेत्पात्रं तद्धृतं रुधिरं भवेत् ।।

आयसेन तु पात्रेण न किंचित्परिवेषयेत् ।
कांस्यपित्तलपात्रेण चान्नाद्यं परिवेषयेत् ।।
अपक्कं तैलपक्कं च हस्तेनैव प्रदीयते ।
उदकं चैव पक्कान्नं नो दद्याच्च कदाचन ।।
लवणं पायसं भक्ष्यं घृतं च व्यंजनादिकम् ।
हस्तदत्तं न गृह्णीयात् गोमांसाशनवत्स्मृतम् ।।
अन्नं दृष्ट्वा प्रणम्यादौ प्रांजलिः कथयेत्ततः ।
अस्माकं नित्यमस्त्वेतदिति भक्त्या द्विजोत्तमः ।।

- इति ब्रह्माण्डपुराणे ।

परिवेषणानन्तरं गन्धाक्षतीर्थादिभिः पूजितानामतिथ्यदीनां अन्नदानं कृत्वा 'एको विष्णुरि'ति विष्णौ समर्प्य । स्वयं गन्धाक्षतादिभि-रलंकृत्य । तीर्थादिकं गृहीत्वा प्राणाग्निहोत्रसंकल्पं कुर्यात् ।

तत्रायं प्रकारः। प्राणानायम्य प्राणाग्निहोत्रं करिष्य इति संकल्प । हृदयं गार्हपत्यः मनो दक्षिणाग्निः आस्यमाहवनीयः। इत्यनुसंधाय ।

संकर्षणश्च प्रद्युम्नस्तत्र भोक्तृषु संस्थितः ।
भोक्तृशक्तिप्रदातारौ भोक्तारौ च विशेषतः ।।
नारायणानिरुद्धौ तु भोज्यवस्तुषु संस्थितौ ।
तर्पकौ सर्वजीवानां तस्माद्भोज्यौ न चर्व्यतः ।।
अवकाशप्रदो नित्यं वासुदेवो नभःस्थितः ।
एवं पञ्चात्मकं विष्णुं य उपास्ते सदैव हि ।।
भोक्ता चाप्यायकश्चैव तस्य विष्णुः प्रसीदति ।।

नैवेद्यशेषं तुलसीविमिश्रितं
विशेषतः पादजलेन सिक्तं ।
योऽश्नाति नित्यं पुरतो मुरारेः
प्राप्नोति यज्ञायुतकोटिपुण्यम् ।।

'द्वाविमौ पुरुषौ लोके' इत्यादिकमुक्त्वा गायत्र्या तुलसी-सहिततीर्थेन अन्नादिकं प्रोक्ष्य गायत्र्याष्टाक्षरादिमन्त्रैरभिमन्त्र्य परषेचयेत् । दिवा सत्यं त्वर्तेन परिषिंचामीति वदेत् । रात्रौ ऋतं त्वा सत्येनेत्युक्त्वा आपोशनमाचरेत् ।

प्राणस्य वस्त्रबुद्ध्या तु भोजनोभयतः पिबन् ।
स्वर्गे मुक्तौ तथा दिव्यवस्त्रलाभी भवत्यलम् ।।

इत्यनुसन्धाय । 'अमृतोपस्तरणमसी'ति मन्त्रेण श्रीतुलसीसहितं शालग्रामतीर्थं पिबेत् ।

मन्त्रार्थस्तु - हे अमृत अमृततुल्य तीर्थ पादोदक त्वं मुख्यप्राणस्य उपस्तरणं परिधानवस्त्रमसि भवसीति ।

तत्र विशेषः -

आपोशनजलं विप्रः पुनः पूरयते करे ।
सशब्दं वाऽपिबेद्यस्तु श्वमूत्रेण समं स्मृतम् ।।
स्वाहान्ताः प्रणवाद्याश्च प्राणाद्याहुतिमन्त्रकाः ।
प्राणापानादिरूपाश्च चतुर्थ्यन्ताः प्रकीर्तिताः ।।
अनिरुद्धादिदेवेभ्यो न ममेति वन्दन् बुधः ।
जिह्वयैव ग्रसेदन्नं दशनैर्नैव संस्पृशेत् ।। - इति ।

हरिं ध्यायन् द्विजोऽस्नीयात् पूर्वं हि मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तादि चान्ततः ।।
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये तु कठिणाशनम् ।
अन्त्ये पुनर्द्रवाशी स्याद्वलारोग्ययुतो भवेत् ।।
जठरं पूरयेदर्धं अर्धभागं जलेन च ।
पूरयेदर्धभागं तु भक्ष्यादिभिरतन्द्रितः ।।
वायुसंचारणार्थाय चतुर्थमवशेषयेत् ।।

- इति ब्रह्माण्डे

हस्ते चायतग्रासः सन् चिन्तयेन्मधुसूदनम् ।
नासनारूढपादस्तु न वेष्टितशिरास्तथा ।।
प्रलपंश्च हसन्नेव बहिर्जानुकरेण च ।
नारोप्य हस्तं भुंजीत पादयोश्च तथा भुवि ।।
नावसारितपादश्च नोत्संगकृतभोजनः ।
नाश्नीयाद्भार्यया साकं शिशुभिर्न विचक्षणः ।।
न शयानो नातिसङ्गो न विमुक्तशिरोरुहः ।
नाम्लप्रधानं विकिरन् न भुंजीतातिकांक्षया ।।
नातिशब्देन भुंजीत न वस्त्रार्धोत्तरीयवान् ।
प्रगृह्य पात्रं हस्तेन भुंजीयाद् द्विजसत्तमः ।।
ग्रासशेषं न चाश्नीयात्पीतशेषं पिबेन्नतु ।
पात्रान्तरेण वा द्रोणैः पिबेत्तोयं द्विजोत्तमः ।।
उद्धृत्य वामहस्तेन न वासान्तरितस्तथा ।
न पिबेत्तज्जलं पीत्वा सुरापानी भवेद्धि सः ।।

स्थापयेज्जलपात्रं तु दक्षिणे वामतो न तु ।
मुखमाच्छाद्य वस्त्रेण पात्रेण न जलं पिबेत् ।।
प्रत्यक्षं लवणं भुक्तं क्षीरं च लवणान्वितम् ।
दधि हस्तेन मथितं सुरया तत्समं स्मृतम् ।।
नोच्छिष्टो घृतमादद्यात्पुरोडाशं च माक्षिकम् ।
अपूपं पायसं मांसं यावकं कृसरं मधु ।।
केवलं यो वृथाऽश्नाति तेन भुक्तं सुरासमम् ।
अनर्पितं च यद्विष्णौ यो भुङ्क्ते स्तेन एव सः ।।
तस्मात्सर्वं तु विमलं [१] विष्णोरर्पितमेव हि ।
सपवित्रेण यो भुङ्क्ते सर्वयज्ञफलं लभेत् ।।
भुक्त्वैव तु द्विजस्तृप्त्यै प्राशयेदम्बु निर्मलम् ।
किंचिदन्नमुपादाय उत्तरापोशनं चरेत् ।।
मुख्यप्राणस्योत्तरीयं वस्त्रं ध्यात्वा जलं पिबेत् ।
अमृतापिधानमसीत्येवं हि कुशपाणिना ।।
पैतृकेण तु तीर्थेन भूमौ दद्यात्तदर्थिनाम् ।
पीतशेषं जलं चान्नं रौरवे इति मन्त्रतः ।।
गण्डूषद्वितयं कृत्वा क्षालयेच्च ततः करौ ।
मृदा हस्तौ शोधयित्वा दन्तांश्चैव तृणादिना ।।
हस्तौ च कूर्परौ पादौ आजानु क्षालयेत्ततः ।
कृत्वा द्वादश गण्डूषान् त्रिराचम्य विशुध्यति ।

---

१. विमलं विगतो मलो यस्मात् तत् शुद्धमित्यर्थः ।

आचम्यैवं द्विजश्रेष्ठो हस्ताङ्गुष्ठजलं क्षिपेत् ।।
दक्षिणस्य तु पादस्य ह्यंगुष्ठे [१] सुसमाहितः ।।
सर्वेषामेव यागानां आत्मयागः प्रकीर्तितः ।
योऽनेन विधिना कुर्यात् स याति ब्रह्मणः पदम् ।।

- इति ।

आचान्तोऽप्यशुचिस्तावद्यावत्पात्रमनुद्धृतम् ।
उद्धृतेऽप्यशुचिस्तावद्यावन्नो लिप्यते मही ।।
भोजनानन्तरं तीर्थं पीत्वा सतुलसीदलम् ।
मूलमन्त्रेणाभिमन्त्र्य स्वोदरं वेदशास्त्रतः ।।
अहःशेषं नयेत्सन्ध्यामुपासीताथ पूर्ववत् ।
प्रदक्षिणनमस्कारान्कृत्वोपासनमाचरेत् ।।
नृत्यगीतपुराणादि श्रवणं कारयेत्सुधीः ।।

- इति ब्राह्मे ।

सायं सन्ध्यामुपास्यैवं हुत्वा भृत्यादिभिर्वृतः ।
औपासनक्रियां कृत्वा अश्नीयादन्वहं द्विजः ।।
सायमप्यतिथिः पूज्यो होमकालागतो द्विजः ।।

एवमतिथीन् भोजयित्वा स्वयं भुक्त्वा शुचिराचम्य ताम्बूल-ग्रहणप्रकारमाह -

एकपूगं महारोग्यं द्विपूगं निष्फलं भवेत् ।

---

१. त्र्यंगुले इति चान्यतः ।

अतिश्रेष्ठं त्रिपूगं च ह्यधिकं दोषकृन्न च ।।
पर्णमूलाद्भवेद्व्याधिः पर्णाग्रात्पापसंभवः ।
चूर्णपर्णं हरेदायुः शिरा बुद्धिविनाशिनी ।।
तस्मादग्रं च मूलं च शिरां चैव द्विपर्णकम् ।
चूर्णपर्णं वर्जयित्वा ताम्बूलं खादयेद्बुधः ।। - इति ।

## ।। अथ शयनम् ।।

यामात्परत एवाथ स्वपेद्ध्यायन् जनार्दनम् ।
अन्तराले ततो बुद्ध्वा स्मरेत बहुशो हरिम् ।।
द्विजः शयीत रात्रौ हि दक्षिणः प्राक्शिरास्तथा ।
प्रत्यक्शिराः प्रवासे तु स्वगृहे प्राक्शिरास्तथा ।।
श्वशुरगृहे दक्षिणतः न कदाचिदुदक्शिराः ।।
- इति ।

अत्र विशेषमाह -

महादेवगृहे मार्गे भूतवेश्मनि न स्वपेत् ।
मान्यगोविप्रदेवानां गुरूणां च तथा गृहे ।।
न चाऽपि भग्नशयने नाशुचौ नाशुचिस्तथा ।।

प्रचेताः -

न च देवसमीपे तु न सन्ध्यायां दिवा द्विजः ।
- इति ।

निद्रासमयमासाद्य ताम्बूलं वदनात् त्यजेत् ।
पुष्पाणि मस्तकाच्चैव ह्यन्यथा दोषवान्भवेत् ।।

रात्रौ स्त्रीसंगविशेषमाह मनुः -

ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
तासामाद्यास्त्रयो वर्ज्या वर्ज्या एकादशी च या ।।
त्रयोदशी च शेषाः स्युः प्रशस्ता दश रात्रयः ।
स्नानं चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः ।।

- इति ।

युग्मासु पुत्रा जायन्ते कन्यास्तु विषमासु च ।

- इति भारते ।

तत्रायं प्रकारः ।

दशम्यादिपुण्यकालवर्जितसमदिवसे स्त्रीसंगं कुर्वन् अर्धरात्रं अपररात्रं दिवा सन्ध्याकालं च त्यक्त्वा रात्रिप्रथमयामानन्तरं पादौ प्रक्षाल्य आचमनं कृत्वा वामदेवयज्ञं करिष्ये इति संकल्प्य । आत्मपत्न्यां भारत्यन्तर्गतलक्ष्मीमनुसन्धाय स्वस्मिन् मुख्यप्राणान्तर्गतं विष्णुं स्मृत्वा तयोः स्वपत्नीरमणकर्तृत्वं च ध्यात्वा 'विष्णुर्योनिं' इत्यादिमन्त्रान्पठित्वा मुखे मुखं लापयित्वा स्त्रीसंगं कुर्यात् । पश्चान्मूत्रपुरीषवन्मृत्तिकाशौचादिकं कृत्वा पादप्रक्षालनानन्तरं षोडश गण्डूषान् कृत्वा त्रिराचम्य यस्य स्मृत्येत्यनेन वामदेवयज्ञेन आत्मान्तर्यामिमुख्यप्राणान्तर्गतविष्णुः प्रीयतामिति समर्पयेत् । ऋतुकाले स्त्रीसंगानन्तरं ।

ऋतौ तु गर्भं शंकित्वा 'स्नानं मैथुनवत्स्मृतं' इत्युक्तस्नानस्य रात्रावसंभवात् पूर्वोक्तमन्त्रस्नानं वा कार्यम् ।

बृहदारण्यकोपनिषदि अन्तिमब्राह्मणे तु वामदेवयज्ञानुसन्धाने प्रकार उक्तः। तत्र चायं खण्डः ।

'तेनैनामन्वसृजत्तस्या वेदिरुपस्था लोमानि बर्हिः चर्माधिषवणे समिधौ मध्यतःस्थौ मुष्कौ धिषणे स यावान् हवै वाजपेयेन यजमानस्य लोको भवति तावांस्तस्य लोको भवति । य एवं विद्वान् अन्धोपहासं चरन्त्यस्य स्त्रियः सुकृतमावृजन्ते' इति ।

अस्यार्थः। श्रीरघूत्तमस्वामिभिः कृतः । कामतः प्राप्तस्यापि मिथुनीभावस्य यज्ञत्वभावनया वाजपेयफलप्राप्तिरिति भावेन अत्रापि वेद्यादिकमाह । तेनैनामिति । तेन महाफलस्य विद्यमानत्वेन तेन यज्ञत्वानुसन्धानेन तेन रेतसा एनां स्वस्त्रियं अन्वासृजेत् संयोजयेत् अद्यतनोऽपि पुरुष इति शेषः । तस्याः स्त्रियः उपस्था वेदिः रोमाणि तद्वर्तीनि बर्हिः तद्वर्ति चर्मैव चर्म कृष्णाजिनस्थानीयम् । यो मध्यतो मध्यदेशे विद्यमानौ मुष्कौ वृषणौ ता अधिषवणे सोमाधिकफलके इत्यर्थः । मध्यतः योनिमध्यदेशे समिद्धो दीप्तोऽग्निः तस्मिन्नग्नौ रेतो जुहुयादिति भावः ।

उक्तप्रकारेण मिथुनीभावस्य यज्ञभावेन कर्तुः फलमाह । स इति । वाजपेयेन यजमानस्य सः प्रसिद्धो यावांल्लोकोऽस्योक्तप्रकारेण मिथुनीभावेन सक्तस्य भवति । वाजपेयेन यजमानः परलोके यावत्सुखं तावत्सुखमनेनापि स्यादिति भावः। फलान्तरमाह। य एवमिति । यः पुरुषः एवमुक्तप्रकारेण मिथुनीभावस्य

यज्ञत्वं विद्वान् अन्धोपहासं चरति अस्य पुरुषस्य सुकृतं स्त्रियः आवृजन्ते प्रापयन्तीत्यर्थः ।।

तद्भाष्ये रेतोभिमाना सरस्वतीत्युक्तम् । ऐतरेये तु आदित्यो अभिमानीत्युक्तम् ।

एतरेयभाष्यं -

स्त्रीषु यल्लोहितं लोके तत्राग्निस्थो जनार्दनः।
स्त्रीरूपः सोऽग्निनामैव ज्वलज्ज्वालसमप्रभः ।।
तस्माद्विष्णोः सन्निधानाद्धर्ता भार्या शरीरगात् ।
न बिभित्सेतैव रक्तात्तथा पुंरेतसि स्थितः ।।
आदित्यसंस्थो विष्णुः सः आदेशादित्यनामकः ।
तस्मान्न रेतसो भार्या बिभित्सेत्तपसि स्थितात् ।।
पुरुषो भगवान् विष्णू रेतसिस्थो द्युमत्प्रभुः ।।

- इति ।

छान्दोग्ये उपमन्त्रयते स हिंकारः ज्ञापयते प्रस्तावः। स्त्रिया सह शेते स उद्गीथः । प्रतिस्त्री सह शेते स प्रतिहारः । कालं तन्निधनं पारं गच्छति तन्निधानम् । एतद्वामदेव्यं [१] मिथुने प्रोक्तम् ।

एतद्भाष्ये -

मिथुनस्य पंचरूपत्वं ध्यात्वैव पुरुषोत्तमम् ।
अत्यागी च स्वभार्याणां मुच्यते नात्र संशयः ।

- इति ।

---

१. एतद्वामदेवयज्ञं मिथुने प्रोक्तमिति पुस्तकान्तरे ।

योनिक्लृप्तिर्वासुदेवाद्रूपं संकर्षणाद्भवेत्[१]।
आसेककर्म प्रद्युम्नादनिरुद्धाच्च धारणम् ।।

इत्ययं श्लोकः। 'विष्णुर्योनिं कल्पयत्वि'त्यस्य व्याख्यानरूपः । इतः पूर्वस्तु हिंकारादिवाच्य अनिरुद्धादिप्रतदिपादक इत्यनुसन्धानम् । स्त्रीसंगकाल इत्यनुसन्धानं कृतं चेद्यज्ञफलं भवति । इति स्त्रीसंगप्रकरणम् ।।

अत्र कश्चिद्विशेषः आचार्यैरुक्तः[२] -

एष नित्यः सदाचारो गृहिणो वनिनस्तथा ।
वैश्वदेवं बलिं दन्तधावनं चाप्यृते वटोः ।।
समिद्धोमो बटोस्तु स्यात् स्मृत्वा विष्णुं हुताशने ।।- इति।

गृहिणः गृहस्थस्य वनिनः वानप्रस्थस्य । बलिं बलिहरणं । सायंप्रात्रर्भिक्षाशनगुरुकुलवासादयो अन्ये विशेषाः स्मृतिपुराणादावुक्ता ज्ञेयाः। एवं संन्यासिनामपि विशेषाचाराः भगवत्पादाचार्यकृतसदाचारस्मृत्युक्ता ज्ञेयाः।

एवं प्रतिपादनं क्रियमाणं कर्म विष्णवे समर्पयेत् । तदुक्तमाचार्यैः। कायेन वाचेति[३] ।

---

१. संकर्षणाभिदादित्यपरेषु ।

२. श्रीमदानन्दतीर्थभगवत्पादाचार्यैः सदाचारस्मृतौ ।

३. कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वाऽनुसृतः स्वभावम् ।
करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ।। - इति ।

इष्टं दत्तं हुतं जप्तं पूर्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् प्रियान् प्राणान् परस्मै सन्निवेदयेत् ।।

इति सर्वस्मिन्नपि कर्मणि हरिस्मरणे कृते पूर्तिः नान्यथा ।

मन्त्रत [1] स्तन्त्रतश्छिद्रं [2] देशकालार्हवस्तुतः ।
सर्वं करोति निश्छिद्र [3] मनुसंकीर्तनं तव ।। - इति ।

इति वामनं प्रति शुकाचार्योक्तेः।

स्मर्तव्यं सततं विष्णुर्विस्मर्तव्यो न जातुचित् [4]।
सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः ।।

इति श्रीमदानन्दतीर्थाचार्योक्तेश्च ।।

छलारिनरसिंहेन कृते स्मृत्यर्थसागरे ।
स्यादाह्निकतरंगोऽयं श्रीमध्वपतितुष्टिदः।।

।। इति श्रीमच्छलारिनरसिंहाचार्यकृतस्मृत्यर्थसागरे
आह्निकतरंगः समाप्तः।।
।। श्रीकृष्णार्पणमस्तु ।।

---

१. मन्त्रत इति। मन्त्रतो वेदादिमन्त्रोच्चारणात् तन्त्रतः कुत्रचिच्छास्त्रकथितभिन्नत्वात् ।

२. छिद्रं अपूर्णम् । पूर्णप्रतिबन्धकम् ।

३. निश्छिद्रं पूर्णम् (निर्गतं छिद्रं यस्मादेवम् ) तव कर्मानुसंकीर्तनं करोति कर्मणि समाप्ते पश्चात्वन्नामग्रहणे सर्वं कर्म पूर्णं स्यादेवेत्यर्थः ।

४. जातुचित् कदापि ।

५. छलारीति । छलारयश्च ते नराश्च तेषु सिंह इव तत्कुलदीपकः इत्यर्थः । तेन कृते स्मृत्यर्थसागरे आन्हिकतरङ्गः समाप्तः ।

।। श्रीकृष्णार्पणमस्तु ।।

श्रीछलारिनरसंहाचार्यकृतस्मृत्यर्थसागरे

# ।। अथ शुद्धितरङ्गः ।।

।।श्रीवेदव्यासाय नमः।।

खननात्पूरणाद्दाहादभिषेचनलेपनात्[१] ।

गोभिराक्रमणात्कालाद्भूमिः शुध्यति सप्तधा ।।

- इति ।

लेपनात् गोमयलेपनात् कालात् यावता कालेन मेध्यादिगन्धलेपक्षयो भवति स काल इत्युच्यते ।

भूमिदुष्टनिमित्तानि तु देवलोक्तानि -

यत्र प्रसूयते नारी म्रियते दह्यते तथा ।

चण्डालाध्युषितं यत्र यत्र मूत्रादिसंगतिः ।

दुष्टा भूमिस्त्रिधा द्वेधा शुद्ध्यते मलिनैकधा ।।

- इति।

अस्यार्थः। सेत्यध्याहारः। प्रसवमरणशवदहनैर्दुष्टा भूमिः[२] खननपूरणलेपनैर्वा गोक्रमणादिभिः त्रिभिर्वा शुद्ध्यति ।

---

।। अथ वस्तुशुद्धिः ।।

१. खननादित्यादि । याज्ञवल्क्यः -

भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा ।

सेकदुल्लेखनाल्लेपात् .. ।। -इति ।

२. दुष्टा भूमिरित्यत्र दुष्टान्विता त्रिधेति पाठो मिताक्षरायाम् ।

सकृच्चण्डालादिसम्बन्धे द्वेधा अभिषेचनलेपनाभ्यां । मूत्रादिसम्बन्धे एकधा गोमयलेपनेन । तथा मलिना च या श्वादिभिर्युक्तसेचनादिना शुद्ध्यतीति ।

एवं भूमिरिव अन्येऽप्यशुद्धिनिमित्तेषु यथायोग्यं चतुर्धा पंचधाऽपि शुद्धिर्ज्ञेया । तदुक्तं -

पंचधा वा चतुर्धा वा भूरमेध्या विशुद्ध्यति । - इति ।

तथा -

अश्वसूकरखरोष्ट्राद्यैः संस्पृष्टा शुद्ध्यति द्विधा ।
अंगारतुषकेशास्थिभस्माद्यैर्मलिनाऽपि सा ।।

गृहशुद्धिस्तु शावादिदूषितत्वे संवर्तेनोक्ता -

गृहशुद्धिं प्रवक्ष्यामि ह्यन्तरस्थस्य दूषणे ।
प्रोत्सृज्य मृन्मयं भाण्डं सिद्धमन्नं तथैव च ।।
गृहादपास्य तत्सर्वं गोमयेनोपलेपयेत् ।
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिणा ।
सर्वमभ्युक्षयेद्वेश्म ततः शुद्ध्येदसंशयः ।।

- इति ।

सेकादुल्लेखनाल्लेपनात् गृहं शुद्ध्यतीति शेषः । मार्जनलेपनादि तु नित्यं गृहशुद्धिविषयकम् । तत्र बालकैरशक्तैर्वा विष्ठावमनादिके कृते उल्लेखनं कार्यम् । उल्लेखनं नाम भूमेः तस्मिन् स्थले अंगुलिमात्रमृत्तिकानिष्कासनम् ।। इति भूमिशुद्धिः ।।

## ।। अथ पात्रशुद्धिः ।।

सुवर्णरूप्यकाष्ठाश्ममुक्तारत्नमयानि च ।
कांस्यपित्तलताम्रादित्रपुसीसमयानि च ।।
निर्लेपानि तु शुद्ध्यन्ति केवलेन जलेन तु ।
सलेपानि च मुद्गादिचूर्णैर्मृद्गोमयाम्बुभिः ।।
गवाघ्रातानि कांस्यानि श्वकाकोपहतानि च ।
शुद्ध्योच्छिष्टानि दशधा त्रिधा मृद्भस्मवारिभिः ।।
गोशृङ्गेणाऽपि संस्पर्शे पात्रशुद्धिरिहेष्यते ।
आयसं शाणतैलाभ्यां ताम्रमाम्लेन शुद्ध्यति ।।
भस्मना शुद्ध्यते कांस्यं चर्म तैलेन शुद्ध्यति ।
शाकरज्जुमूलफलं [१] वासोविदलचर्मणा ।
पात्राणां चमसानां च वारिणा शुद्धिरिष्यते ।।

शाकं पत्रपुष्पादिरूपम् । रज्जुः [२] नूतनरज्जुः। मूलं आर्द्रकादि फलं [३] आमलकादि । वासः [४] नूतनवस्त्रं । विदलं [५] वेणुविकारच्छत्रं । व्यजनादि चर्म [६] पादरक्षादि। पात्राणां ताम्रादिपात्राणां। चमसानां यज्ञियानां उलूखलादीनां घृताद्यलिप्तानामिति शेषः। वारिणा सम्यग्वारिप्रक्षालनेन । लिप्तानां तु मुद्गचूर्णादीनां लेपराहित्यं कृत्वा पश्चाद्वारिणा शुद्धिः। पूर्वमेवोक्तेति ।

---

१. शाकं मूलं फलं रज्जुरिति पुस्तकान्तरे ।

२. रज्जुः बल्वजादिनिर्मिता ३. फलमाम्रादि ४. वासो वस्त्रं ५. विदलं वेणवादि।

६. चर्म अजादीनाम् । विदलचर्मणोर्ग्रहणं तद्विकाराणां छत्रवस्त्रादीनामुपलक्षणं । इत्यादि मिताक्षरायाम् ।

अन्यत्रापि -

भस्मना शुद्ध्यते कांस्यं सुरया यन्न लिप्यते ।
सुरामूत्रपुरीषैस्तु शुद्ध्यते तापलेपनैः ।। - इति ।
आमिषेण तु यल्लिप्तं लोहं दाहेन शुद्ध्यति ।। - इति ।
सूतिकामद्यविण्मूत्ररजस्वलहतानि च ।
पात्राणि सप्तरात्रैस्तु गोमूत्रे परिवासयेत् ।।
ब्रह्मक्षत्रविडुच्छिष्टस्पर्शे संमार्जनाच्छुचिः ।।

जातिभुक्तोच्छिष्टस्पर्शे विशेषः ।

कांस्यपात्रे विशेषः -

गण्डूषं पादशौचं च यः कुर्यात्कांस्यभाजने ।
षण्मासं तु विनिक्षिप्य पुनराकारमादिशेत् ।।
- इति ।

अत्र भुवि खनित्वा षण्मासं विनिक्षिप्य उद्धृत्य भस्मना मार्जितं शुद्ध्यति ।

तथा -

कांस्यं श्वोपहतं चेत्स्यात्खनित्वा भुवि निक्षिपेत् ।
दोषानुसारात्सप्ताहः प्रभृत्युद्धृत्य भस्मना ।। - इति ।
काष्ठानां तत्क्षणाच्छुद्धिः मृद्गोमयजलैरिति ।।

तथा -

मिलितानां तु पात्राणां यद्येकमुपहन्यते ।
तस्यैव शोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत् ।। - इति।

तथा -

मद्यैर्मूत्रपुरीषैर्वा ष्ठीवनैः पूयशोणितैः ।
संस्पृष्टं नैव शुद्ध्येत ततस्त्याज्यं हि मृन्मयम् ।।

इति पात्रशुद्धिः ।।

## ।। अथ धान्यादिशुद्धिः ।।

विष्णुः -

व्रीह्यादीनां तु यन्मात्रं श्वकाकैरुपहन्यते ।
तावन्मात्रं परित्याज्यं सतुषं कंडनं भवेत् ।।
व्रीहयः प्रोक्षणादद्भिः शाकमूलफलानि च ।
तन्मात्रस्यापहाराद्वा निस्तुषीकरणेन वा ।।

अत्र काश्यपेन विशेष उक्तः -

व्रीहियवनगोधूमानां अनेकपुरुषोद्धार्याणां प्रोक्षणाग्निस्पर्शाभ्यां शुद्धिः। स्वल्पानां तु प्रक्षालनेन । तण्डुलानां तु पुनः कंडनेन दलनेन प्रोक्षणेन वा । एवं मुद्गमाषादिसतुषधान्यानामपीति ।

मृन्मये स्थापितानां च तथा भुवि च तिष्ठताम् ।
यवमाषतिलादीनामदोषं मनुरब्रवीत् ।।

तथा -

यत्र संक्रममाणाग्नौ केवलं गृहदीपनम् ।
तत्र सर्वाणि द्रव्याणि गृह्णीयादविचारयन् ।।

- इति।

सिद्धान्ते मनुः -

पक्वान्नं तु गवाघ्रातं पक्षिजग्धमवक्षुतम् ।
दूषितं केशकीटैश्च मृदद्भिः प्रोक्षणाच्छुचिः ।।
देवालये विवाहादौ यज्ञेषु प्रकृतेषु च ।
काकैः श्वभिश्च संस्पृष्टं सर्वं तन्न विवर्जयेत् ।।
तन्मात्रमन्नमुद्धृत्य शिष्टं संस्कारमर्हति ।। - इति ।

प्रसक्तोत्सवेषु । इदं वाक्यं बह्वन्नविषयमेवेति वेदितव्यम् ।

तदाह पराशरः -

पक्वं द्रोणादिकं त्वन्नं श्वकाकाद्युपघातितम् ।
ग्रासमुद्धृत्य तन्मात्रं यत्तु लालाकृतं भवेत् ।।
हैमोदकेन [१]चाभ्युक्षेद्द्रवत्तेनाम्बुनाऽपि वा ।।
अग्निज्वालासु संस्पर्शात् सुवर्णमधुसर्पिषाम् ।
विप्राणां वेदघोषेण पूतं भोज्यं तु तद्भवेत् ।।
- इति ।

द्रोणः षट्पंचाशदधिकाद्विंशत्पलानि । पलं तु षोडशमाषात्मक-कर्षाश्चत्वारः । पंचगुंजात्मकः माषः। 'गुंजाः पंचाद्यमाषक' इति । 'ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम्' ।।

यत्तु लालाकृतं यदप्यन्नं श्वादिलालासम्बन्धं तत्रत्यग्रासमात्र-मुद्धृत्य अभ्यक्षेदित्यन्वयः। सर्पिषामित्यत्र संस्पर्शादित्यन्वयः।

---

१. होमोदकेनेत्यस्मिन्पुस्तके पाठः ।

अन्नमेकाहिकं पक्वं स्वकाकाद्युपघातितम् ।
केशकीटाद्युपेतं च तदप्येवं विशुद्ध्यति ।।

एकाहिकमेकदेनभोज्यम् । एवं हैमोदकादीनां । इदं वाक्यं दरिद्र-विषयम् । समर्थस्य तु तदन्नं त्यक्त्वा पुनरन्नं कार्यमेव ।

क्रीतस्यापि सुदुष्टस्य शुद्धिरुक्ता मनीषिभिः ।।

- इति ।

सुदुष्टस्य शूद्रादिस्पर्शेन सुदुष्टस्य शाकपर्णदध्यादेः क्रीतस्यक्रीतत्वे-नैव शुद्धिरित्यर्थः । अत्राऽपि विशेषः । दधिमधुद्रव्याणां द्रव्याणां प्लावनेन शुदिधिरिति । धनानां प्रोक्षणेन च ।

तदाह शंख -

श्रपणं घृततैलानां लवणं गोरसस्य च ।
भाण्डानि प्लावयेदद्भिः शाकमूलफलानि च ।।

- इति ।

प्लावनात् कस्यचिद्भागस्य त्यागात् । धान्यानां पर्पटकादीनां । श्रपणं अग्निसंस्कारः। 'द्रव्याणां चैव सर्वेषां शुद्धिरुत्प्लवनं स्मृतमि'ति श्रुत्युत्तरोक्ताप्लवनोत्प्लवनयोः विकल्पो बोध्यः।

शूद्रभाण्डस्थितगोरसादेः पात्रान्तरे स्थापनेन शुद्धिः ।

तदाह वृद्धवसिष्ठः -

आधारदोषे तु नयेत्पात्रात्पात्रान्तरे ध्रुवम् ।
घृतं क्षीरदधिक्षौद्रतैलेक्षुरसरूपिणाम् ।।

आधारदोषे शूद्रभांडस्थिताधारदोषे सति ।

मृत्पर्णादिषु विष्णुना विशेष उक्तः -

मृत्पर्णतृणकाष्ठानां श्वास्थिचण्डालवायसैः ।
स्पर्शने विहितं शौचं सूर्यसोमाग्निमारुतैः ।।

- इति ।

शुद्धिस्तु फलपुष्पाणां प्रोक्षणात्पुस्तकस्य च ।
रथ्या कर्दमतोयानि नावः पथि तृणानि च ।।
मारुतेनैव शुद्ध्येत पक्वेष्टकचितानि [१] च ।।

- इति ।

मनुना द्रव्यहस्तस्य उच्छिष्टादिस्पर्शविशेषश्चोक्तः -

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथंचन ।
अनिधायैव तद्रव्यमाचान्तः शुचितामियात् ।।

- इति ।

इति धान्यादिशुद्धिः।।

## ।। अथोदकशुद्धिः।।

तदाहतुः व्यासबृहस्पती -

भूयिष्ठमुदकं मेध्यं वैतृष्ण्यं यत्र गोर्भवेत् ।
अव्याप्तं चेदमेध्यं स्यात्तद्वदेव शिलागतम् ।।

- इति ।

---

१. पक्वेष्टकाचितानि । पक्वेष्टकादिर्भिश्चितानि धवलगृहादीनि ।

उद्धृतोदकविषये तु -

उद्धृता [१] वा प्रशस्ताः स्युः शुद्धैः पात्रैर्यथाविधि।
एकरात्रोषितास्ताश्च त्यजेदापः समुद्धृताः।।

- इति ।

विशेषान्तरं स एवाऽऽह -

अक्षोभ्यानि तटाकानि नदीवापीसरांसि च ।
चण्डालाद्यशुचिस्पृष्टमार्गतः परिवर्जयेत् ।।

इति चण्डालादिसम्बन्धमार्गं वर्जयित्वा अन्यमार्गेण जलं गृह्णीयात् इत्यर्थः।

वापीकूपादिविषये हारीतः -

वापीकूपतटाकेषु मानुषं यदि शीर्यते ।
अस्थिचर्मविनिर्मुक्तैर्दूषितं च रसादिभिः ।।
उद्धृत्य तज्जलं सर्वं शोधनं परिमार्जनम् ।।

- इति ।

अस्थिचर्मविनिर्मुक्तैः चिरकालवशाद्विशीर्णैरित्यर्थः ।

देवलोऽपि -

उद्धरेदुदकं कुर्यात्प्रचयिष्ठान्मृदस्तथा ।
पंचगव्यं न्यसेत्पश्चान्न तु तोयं समुद्धरेत् ।।

- इति ।

चण्डालादिभिः चिरकालोपहतौ तु हारीतः -

---

१. उद्धृताविति । इदं देवलवचनम् अग्रेऽपि स एव नाम देवल एव ।।

घटानां शतमुद्धृत्य पंचगव्यं क्षिपेत्ततः ।
श्वभिः श्वपाकचंडालैर्दूषिते तु विशोधनम् ।।

- इति ।

उपानच्छ्लेष्मविण्मूत्रस्त्रीरजो मद्यमेव च ।
एभिर्विदूषिते कूपे कुम्भानां षष्टिमुद्धरेत् ।।

- इति ।

जलाशयेषु स्वल्पेषु स्थावरेषु महीतले ।
कूपवत्कथिता शुद्धिर्महत्सु च न दूषणम् ।।

- इति ।

कूपतटाकादिगतनवोदकं दशरात्रेण शुद्ध्यति ।
तदुक्तम् -

अजा गावो महिष्यश्च स्त्रियश्चैव प्रसूतिकाः ।
दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकम् ।। - इति ।

जलपात्रादिकं स्वकीयमेव स्वस्य शुद्धम् ।

आत्मशय्यासनं वस्त्रं जायापत्यं कमण्डलुः ।
शुचीन्यात्मन एतानि परेषामशुचीनि ह ।।

-इति हारीते ।

इत्युदकशुद्धिः [१] ।।

---

१. इत्युदकेति ।

अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा ।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ।। - इति ।

## ।। अथ वस्त्रशुद्धिः ।।

व्यासः -

वस्त्रं मृदम्भसा शुद्ध्येद्रज्जुर्वैदलमेव च ।
रज्ज्वादिकं चातिदुष्टं त्याज्यं तन्मात्रमेव च ।।

- इति ।

शुद्धे तु तैलादिना दुष्टमिति शेषः । वैदलं शूर्पादि । रज्ज्वादिकं रज्जुशूर्पादिकं । अतिदुष्टं उच्छिष्टादिनेति शेषः । वस्त्रं तु उच्छिष्टादिना दुष्टं चेति मृदम्भसैव शुद्ध्येदिति भावः ।

यमोऽपि -

यदि मूत्रपुरीषाभ्यां रेतसा रुधिरेण वा ।
चैलं समुपहन्येत ह्यद्भिः प्रक्षालयेत्ततः ।।
यदम्भसा न शुद्ध्येत वस्त्रं चोपहतं दृढम् ।
छेदने तस्य दाहो वा यन्मात्रमुपहन्यते ।।

अत्र छिन्नदग्धयोरपि परित्याज्यत्वात् । छेददाहाभ्यां शुद्ध्यभिधानं अत्यन्तदुर्लभोत्तमविषयम् । दरिद्रस्य अनुत्तमेऽपि छेदनादिना शुद्धिः।

अत्र विशेषः -

वस्त्रधान्यादिराशीनां एकदेशस्य दूषणे ।
तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति ।। - इति ।

दूषणे चण्डालादिस्पर्शे । शेषस्य प्रोक्षणविधानात् । उद्धृतस्य प्रक्षालनमिति गम्यते ।

सर्वस्य स्पर्शे तु मनुः -

अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ।
प्रक्षालनेन स्वल्पानामद्भिः शौचं विधीयते ।। - इति ।

नांशैर्बहुत्वं एकपुरुषग्राह्यत्वाभावादधिकत्वम् ।

अत एव देवलः -

और्णकौशेयकार्पासवार्क्षक्षौमदुकूलजाः ।
अल्पशौचा भवन्त्येते शेषेण प्रोक्षणादिभिः ।।
तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः ।
तुलिकामुपधानं च ऊर्णं रक्ताम्बरं तथा ।।
शोषयित्वा तपेत्किञ्चित्करैः संमार्जयेन्मुहुः ।
पश्चाच्च वारिणा प्रोक्ष्य विनियुज्येत कर्मणि ।।
तान्यप्यतिमलिष्ठानि यथावत्परिशोधयेत् ।। - इति ।

अधिकोपघाते तु याज्ञवल्क्यः -

शेषैरुदकगोमूत्रैः[1] शुद्ध्यत्याविककौशिकम् ।
सश्रीफलै[2]रंशुपटः सारिष्टैः[3] कुतुपस्तथा ।
स गोरसार्कतः क्षौमं ..... ।। - इति ।

शेषैः सक्षारमृत्तिकादिभिः । आविकं कम्बलादि । कौशिकं सर-पटादि । अंशुपटः वर्तुलतन्तुकृतः । कुतुपः सर्वतश्छागलोमकृतः।

---

१. शेषैरुदकगोमूत्रैरित्यत्र सोखैरुदकगोमूत्रैरिति मिताक्षरायाम् । उखरमृत्तिकासहितेन गोमूत्रेण उदकेन वा ।

२. सश्रीफलैः बिल्वफलसहितैः । अंशुपटः वल्कलतन्तुकृत इति वा ।

३. सारिष्टैः अरिष्टफलसहितैः ।

धाबलिभोटुशकलादिसंज्ञिकः । क्षौमं पीताम्बरादि । तूलिका-कशिषु । सुपत्ति । उपधानं उपबर्हणम् । शिरोधःस्थानीयम् ।

पत्रं पुष्पं प्रक्षालनेन गन्धरहितं स्यात्तत्प्रोक्षयेत् । इदं तु भोगार्थं । देवार्थं चम्पकादि सर्वपुष्पं प्रक्षालयेदेव ।

अप्रक्षालितपुष्पाणि प्रक्षाल्य तुलसीं तथा ।

इति शतापराधमध्ये अप्रक्षालितपुष्पसमर्पणस्यापराधत्वेनोक्तेः। रक्ताम्बरं मांजिष्टादि । क्षालने यस्य रंगो गच्छति तन्न क्षालयेत् ।

चैलवच्चर्मणां शुद्धिः प्रोक्षणान्न च वाससाम् ।

इति वचनात् । वाससां यंत्रादुत्तीर्णानाम् ।। इति वस्त्रशुद्धिः।।

## ।। अथ स्वभावशुद्धिः।।

तत्र मनुः -

दानं तपोऽग्न्यनीहारौ मृद्रव्यमथवा जलम् ।
वायुविद्या अर्थसत्ये शुद्धिकर्तरि देहिनाम् ।।
वागच्युता जपश्चैव सत्ये शुद्धिः प्रकीर्तिता ।
सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् ।।
योऽर्थशुद्धिः स हि शुचिर्न मृदा शुचिरिष्यते ।।
वेदाच्छुद्ध्यन्ति विद्वांसो दानेनाकार्यकारिणः ।
प्रच्छन्नापापा जप्येन तपसा वेदवित्तमाः।।
मृत्तोयैः शोध्यते शोध्यं नदी वेगेन शुद्ध्यति ।
रजसा स्त्री मनो शुद्धा सन्न्यासेन द्विजोत्तमाः।।

अद्भिर्गात्राणि शुद्ध्यन्ति मनः सत्येन शुद्ध्यति ।
विद्यातपोभ्यां [१] पूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति ।।

इति स्वभावशुद्धिः ।।

एवमादि [२]शुद्धिकरं सर्वोत्तमं हरिस्मरणं कीर्तनं च ।
तदुक्तं पद्मपुराणे -

नाम्नोऽस्य यावती शक्तिः पापनिर्हरणे हरेः ।
तावत्कर्तुं न शक्नोति पातकं पातकी जनः।।
स्मर्तव्यः सततं विष्णुः विस्मर्तव्योः न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः ।।
तपोजपादिसच्छिद्रं देशकालार्हवस्तुतः।
सर्वं करोति विधिना ह्यनुसंकीर्तनं तव ।।

- इति ।

तदेतत्सर्वं तरंगचतुष्टयं संगृहीतश्रुतिपुराणस्मृत्युक्तं विस्तर-भयात् किञ्चित्किंचित् प्रमाणमुदाहृतम् । किंचिदर्थतोऽनुदितम् । इति सारज्ञैर्ज्ञेयम् [३] ।।

---

१. विद्यातपोभ्यां पूतात्मा इत्यत्र 'विद्यातपोभ्यां भूतात्मा' इति च पाठः । भूतात्मा सूक्ष्मादिलिङ्गशरीरावच्छिन्नो जीवात्मा । विद्यया पापक्षयहेतुना वेदान्तादिना । तपसा च शुद्धो भवति ।।

२. अथोपसंहारमाह एवमादीति ।

३. सारज्ञैः शास्त्रार्थतत्वज्ञैः ।

तत्कर्मध्यानपूजादिसाधनैः पुरुषार्थदम् ।
सर्वशुद्धिकरं शुद्धं विष्णुं वन्दे निरन्तरम् ।।

त्रिशून्यं [१] षट्चन्द्रमिति शाके दुर्मतिवत्सरे ।
अश्विनो ह्यधिको मासो मार्गपौषे क्षयाभिधौ ।
ततश्चैत्रोऽधिको यस्मिन्तद्वर्षस्य तु कार्तिके ।।।

छलारिश्रीनृसिंहेन कृते स्मृत्यर्थसागरे ।
भवेच्छुद्धितरंगोऽयं श्रीमध्वपतितुष्टिदः ।।

इति श्रीछलारिनरसिंहाचार्यप्रणीतस्मृत्यर्थसागरे
।। शुद्धितरंगः समाप्तः ।।
।। श्रीकृष्णार्पणमस्तु ।।

***

---

१. त्रिशून्यमिति त्रिः शून्यम् षट् चन्द्रः एकम् एतैर्मिते १६०३ तमे शाके शालिवाहन-शाके यस्मिन् अश्वनोऽधिकसंज्ञकः मार्गपौषौ क्षयाभिधौ अग्रे च चैत्रोऽधिकसंज्ञकः तस्मिन्वर्षे कार्तिके अस्मिन्स्मृत्यर्थसागरे वस्तुशुद्धितरङ्गसमाप्तिः । स च मध्वान्तर्गत-विष्णुप्रीतये भवतु ।।

***

छलारिनारायणवर्यपुत्र-
नृसिंहनाम्ना रचितः शुभोऽयम् ।
साधारणः पण्डितपामराणां
ग्रन्थः स्फुटोऽयं पितृतुष्टये स्यात् ।।

।। इति श्रीमच्छलारिनारायणाचार्यात्मजनृसिंहाचार्यरचितः
स्मृत्यर्थसागरः समाप्तः।।
।। श्रीकृष्णार्पणमस्तु ।।

।। समाप्तोऽयं ग्रन्थः ।।
।। श्रीकृष्णार्पणमस्तु ।।

******

****

**

---

१. छलारीति । छलारीत्युपाह्वाः नारायणाचार्याः तेषां पुत्रो नृसिंहाख्यस्तेन रचितो यः पण्डितानामज्ञानिनां चापि साधारणः सामान्येन स्फुटः स्पष्टः अयं स्मृत्यर्थसागरः पितृतुष्टये भवत्वित्यनेनैवालम् ।।

।। श्रीकृष्णार्पणमस्तु ।।